Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

॥ श्रीः शरणम् ॥

# मधुरवाणी

संस्कृतमासपत्रिका

प्रधान सम्पादकः
पं. गलगलीरामाचार्यः
संस्कृतसाहित्यरत्नम्

सम्पादकः
पं. घुर्लीश्रीनिवासाचार्यः
संस्कृतसाहित्यभूषणम्

सहसम्पादकः
पं. गलगलीपण्ढरीनाथाचार्यः
सं. सा. सुधाकरः

वार्षिकं मूल्यम् रूप्यकचतुष्टयम्

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.


## अवधानं दीयताम् वैद्यवराः

भवदर्थे मूल्येनाल्पेन सिद्धौषधविक्रीणनमस्माभिः क्रियते। भवत् समाधानमेवास्माकमिष्टम् एकवारमनुभूयंतां औषधिगुणाः मूल्यपत्रं (Price list)

**आयुर्वेदीय औषधि भांडार २८ शुक्रवार पुण्यपत्तनम्।**


---

## अनुक्रमणिका



---

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

॥ श्रीशः शरणम् ॥




सुधानिष्यन्दिन्या मधुरमधुरालापकलया
खलावज्ञामूर्छाभरमपहरन्ती सुगिरः ।
मनोज्ञालङ्कारा रसिकजनचेतांसि सहसा
वशीकुर्वाणेयं भुवि मधुरवाणी विजयते ॥

१२ वर्षे ] १८६८ शकस्य [ २ सञ्चिका:

धाराधरमधुस्यन्दमिलिन्दाय मधुद्विषे ।
कृष्णपटकुविन्दाय गोविन्दाय नमोऽस्तु नः ॥

## ब्रिटीशमुख्यमन्त्रिणः 'अतलीय' महाभागस्य

# भारतस्वातन्त्र्यघोषणा

अतीतमासे आङ्ग्लसाम्राज्यमुख्यमन्त्रिणा भारतस्वातन्त्र्यविषयिणी व्यधायि महत्त्वपूर्णा घोषणा महच्चमत्कृतिपूर्णा भावगभीरा गूढाशयगर्भिता नैकार्थसंभवा समग्रे स्वानुकूल्यसम्पादनक्षमा वरीवर्ति । यामुपश्रुत्य लीगीया यवनाः स्वानुकूलेति मन्यन्ते प्रमोदन्ते च । कांग्रेसीयाश्च महत्त्वपूर्णा धैर्यद्योतिकेति तामाद्रियन्ते स्तुवन्ति च । तस्यां घोषणायां भाविनि वर्षे ब्रिटीशानां संपूर्णसत्तात्यागमन्तरा सर्वोऽपि भागः सन्दिग्धः जटिलः परिवर्तन-परावर्तनगुप्तपथबन्धुरो नैषधकाव्यत्रयोदशसर्ग इव नैकार्थगुम्फितः द्वैताद्वैत—विशिष्टाद्वैता-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अनेकमतानुकूलत्वेन भासमानानि ब्रह्मसूत्राण्यप्यतिशेते । महाभारतग्रन्थइव दर्शनीभाषा—समाधिभाषा—गुह्यभाषेतिभाषात्रयवेदिभिराकलनीयः, अथवा तैरपि अनाकलनीयगरिमा समय—प्रसङ्गस्वानुकूलार्थप्रसञ्जन—प्रस्फोटनपटुरयमप्रकटितसत्यार्थोऽस्फुटपदः कुटिल—कपटजालजटिलः पटुमतीनपि भ्रमयति निजचातुरीपरिपाट्या ।

देशे विदेशीयानां राजकीयवर्चस्वितापेक्षया आर्थिकवर्चस्विता नितरां भयावहा सर्वस्वशोषणकरी च । वाणिज्यप्राणा हि पाश्चिमात्याः । कदाचिद्भारते ते राजकीयस्वातन्त्र्यं त्यजेयुः न वाणिज्यव्यवसायम् । नवीनपरिस्थित्यां ब्रिटिशानां व्यापारौद्योगिकोपक्रमस्य समीचीनोऽवकाशो लभ्येतेति अस्यां राजकीयश्वेतपत्रिकायां सदिच्छा प्रदर्शिता । एतदपि नेतृभिर्विचारणीयम् ।

सपादवर्षादनन्तरम् राज्यशासकाः आंग्ला भारतशासकत्वं भारतीयानां हस्ते समर्पयेयुः । परं हिन्दू—मुसलमानेति द्विधाभिन्नेषु मिथोविरोधिषु केषां हस्ते समर्पयेयुरित्यस्मिन्विषये श्वेतपत्रिकाघोषणा सर्वथा संदिग्धाऽसमाधानकारिणी भारतस्याखण्डताभङ्गनिर्मात्री चेति प्रतीयते । खिस्तशके १९४८ तमवत्सरस्य जूनमासपर्यन्तं पूर्णप्रातिनिधिकघटनासमित्या भारतराज्यघटना यदि न निर्णीयेत तर्हि मध्यवर्तिनी सत्ता कस्य हस्ते देया ? । सैव सा मध्यसर्वकाराय देया, उत केषुचिद्विभागेषु विद्यमानप्रान्तिकसर्वकाराय समर्पणीया, आहोस्विद् हिन्दीलोकानां हितदृष्ट्या समुचितया अन्यया रीत्या वा प्रदातव्येत्येष विचारो ब्रिटिशसर्वकारेण क्रियेत, इति घोषणागतानि वाक्यानि । के के अर्था न स्युरेतैर्वाक्यैरस्फुटैः । सांप्रतं सकण्ठनिष्कंपं विवदमाने हिन्दू—यवन-समाजे संपूर्णप्रातिनिधिकघटनासमितिरेव दुर्घटा, तया निर्णीयमाना राज्यघटना दूरतोऽपास्तैव । आस्यामवस्थायां स्वराज्यदानाधिकारः स्वेच्छानुसारं ब्रिटिशानामेव । एवं स्थिते केषां हस्ते स्वराज्यं दीयेतेति कथं निर्णेतुं शक्यते । केषांचित्प्रान्तिकसर्वकाराणां हस्ते विशृङ्खलतया तत्प्रान्तीयपूर्णाधिकारे दत्ते देशविच्छेदः संभाव्य एव । लीगपक्षीयाणामल्पसंख्याकानां जनानां विरोधेन

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



एकस्य मध्यवर्तिसर्वकारस्य हस्ते भारतराज्यं समर्पयितुं नाभ्युपगच्छन्त्यांग्ल-शासकाः । लीगविरोधेन प्रस्तुतां घटनासमितिं प्रातिनिधिकस्वरूपां न मन्यन्ते इति स्फुटमुच्यते घोषणयाऽनया । लीगसहकारितामन्तरा घटनासमित्या या निर्मियते राज्यघटना, न सा 'समग्रे भारते समुपयोक्ष्यते । एवं विचार्यमाणे ब्रिटीशसर्वकारेण स्वीकृतः स्वसत्तात्यागमार्गो न केवलमनुपयुक्तः प्रत्युतानर्था-वहश्चेति गम्यते ।

१८४८ वत्सरस्य जूनमासे कस्य हस्ते स्वराज्यं देयमिति निर्णया-धिकारं स्वयं स्वीकृत्य ब्रिटीशसर्वकारेण भारतस्य स्वयंनिर्णयाधिकारः समुद्वा-सितः । ब्रिटीशानां सत्तात्यागेच्छा यदि प्रामाणिकी, तर्हि निश्चितदिने भारत-देशात आत्मनः शस्त्रादि स्वदेशं नेयम् । आत्मनो निर्गमनानन्तरं देशस्यास्य राज्यं के कुर्युरित्येष विचारः कुत स्तेषाम् । समर्थाः के वाऽपि कुर्युः । अयं विचारस्तेषामावश्यकः । ब्रिटीशानां प्रयाणे भारतराज्यव्यवस्थां निर्मातुं हिन्दी-लोकाः पूर्णतया समर्थाः सन्त्येव । स्वराज्यभारे अङ्गे पतिते स्यादैक्यं हिन्दीजनेषु, निर्बाधितबन्धा राज्यव्यवस्थाऽपि जायेत । यदि तेषु आधुनिकी दुराग्रहमूलिका घातुकवृत्तिः कैश्चन स्वीक्रियेत, तर्हि तस्योच्चाटना इतरैः क्रियतैव । अतः आगामिने नवराष्ट्रनिर्माणाय सर्वानपि प्रतिबन्धपर्वतानुल्लङ्घ-यितुं हिन्दीजनतासिद्धैव ।

एवं सत्तात्यागघोषणायां बहुष्वातङ्केषु सत्स्वपि अनया घोषणया सेवक (मजूर) सर्वकारेण कैश्चनांशैरात्मनो भारतीयविषये सत्यमेव सदिच्छा प्रद-र्शिता । तेन भारतराजकीयवातावरणे अनैसर्गिककृत्रिमकोलाहलोपशमे महदेव साहाय्यं स्यादित्यत्र निर्विवादम् ।

---

## अभिनन्दनम्

जगति त एव बहुबलाः श्रीलाः, ये धर्मैकफलं धनं कामेष्वेवोपयुञ्जति । भारतीयधर्मसंस्कृतिसंजीवनक्षमसंस्कृतभारतीरक्षणमन्तरा को वास्युच्चतरो धर्मो-नाम सांप्रतम् । तदेतदितरासाधारणं विचारं मनस्याकलय्य श्रीमान् धीमानयं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



देशपांडेत्युपाह्वः 'चिनाल' ग्रामाधीशः **श्रीभगवन्तराव** इत्यन्वर्थनामा महाभागोऽमधुरवाणीपोषणाभिलाषी इदानीं पञ्चविंशतिरूप्याणि प्रदाय अचिरादेव सैकशतरूप्यदाने आश्वासनं दत्तवानिति मधुरवाणी सानन्दमभिनन्दतितमाम्। सोऽयं महाशयो युवाऽपि पाश्चात्यविद्याभूषितोऽपि प्राण—भूमि—धनसम्पन्नोऽपि विनयगुणबन्धुरः औदार्यमहोज्ज्वलो जगति विपुलां कीर्तिं महतीं प्रतिष्ठाम् अविकलमारोग्यं चिरतरमायुरविच्छिन्नां च सन्ततिं भगवदनुकम्पया श्रीभगवन्तरायो लभतामिति भृशमाशंसामहे कृतज्ञतया।

यस्मिन्भारते पुरा संस्कृतमेव गृहभाषाऽऽसीत्। लालिता ललिता बालाः कलवर्णैः संस्कृतमयैः कल्पयन्ति स्म अविकलमानन्दं पितृ—बान्धवानां, ललना अपि वल्लभेन समं प्रेमालापं, शिशुभिर्वात्सल्यसंलापं विदधते स्म गीर्वाणगिरा एव हन्त तस्मिन्नेव देशे कालमहिम्ना विदेशीयशासनप्रभावेण भारतीयानां स्वधर्म—संस्कृतिभाषाभिमानवैधुर्येण वा संस्कृतवाग्विरलप्रचारा संवृत्ता। तदस्यां परिस्थित्यां संस्कृतप्रणयिनः पुरुषा एव यदा विरलाः, किंपुनर्महिलाः। तथापि सुरभाषासौभाग्यवशाद् मेघाच्छन्ने नभसि विद्युल्लेखा इव क्वचन क्वचन विद्योतन्ते गीर्वाणप्रणयिन्यो विदुष्यश्च। तास्वन्यतमकाऽस्मन्नयनाङ्के प्रकटितलेखनकलावैदुला समाविष्कृतविविधपद्यपरिपोषणाभिलाषा सम्यगाविमर्शितगीतोपनिषदादिविषयपरिचयविशेषा विदुषीमणिः न केवलं बेलगांवनगरे, अपितु कर्णाटके वर्णभूषणायमाना हरिहरेत्युपाह्वा सौभाग्यशालिनी **श्रीयमुनादेवी** नाम। सेयं महाभागा सुरवाणीप्रेम्णा मधुरवाण्यां कीदृशं सहोदरीवात्सल्यं सखीप्रणयंचावध्नातीति तदीयलेखेनैव स्फुटं भवति परं सोऽयं प्रणयो न शुष्कोपचाररूपः, अपितु सक्रियसहानुभूतिरसाप्लावितः। तस्येदं निदर्शनम्, यदियं महाशया मधुरवाणीपोषणकृते सैकशतरूप्याणि प्रदाय साधारणेतरमितरानुकरणीयमौदार्यं प्रादर्शदियं मेधाविनी। तत्कृते सहस्रशो धन्यवादानर्पयन्ती सकृतज्ञभावं सदाश्रेयःपरम्परामाशंसति मधुरवाणी।

---

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

# श्रीश्रीमन्महाराजराजेश्वराः श्रीअलवराधीश्वराः

ले०—साहित्यभूषणः श्रीरमानन्दसारस्वतः साहित्यरत्नं
संस्कृतकॉलेज अलवरम्.

---

श्रीमदलवरधरणीधुरन्धराणामलवरपुरन्दराणां सिद्धिश्रीमद्धर्मरक्षकाणां न्यायपरायणानां वीराग्रगण्यानां रघुकुलभूषणनरुवंशावतंस सर् के. टी. के. सी. एस्. आई. ई. प्रभृतिविविधविरुदावलिविभूषितानां हिज हाइनेस श्री १०८ **मत्सवाई श्रीतेजसिंहजी देवबहादुर** इति वीरेन्द्रशिरोमणीनां ( यैः विगतेषु मासेषु संस्कृतविश्वविद्यालयस्य प्रतिष्ठापनाय भूदान, पुस्तकालयदानादिदानैः सह कोट्यधिकरूप्यकाणां दानं दातुं प्रतिज्ञातमस्ति ) तेषां धर्मधुरन्धराणां परमपावनपरिचयं कवितिलकायमानस्य श्रीकालिदासस्य "प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत् । सहस्रगुणमुत्स्रष्टुं आदत्ते हि रसं रविः ॥" शब्देषु न परिचितेपि राज्ञि स्वभावे आचार—विचार—व्यवहार—नीति निचये स्वब्राह्मण्यतया किंचिदुपन्यस्यते तावत् सूक्ष्मरूपेण ।

अस्य अलवरराज्यस्य संस्थितिः राजपुत्रप्रदेशे । ( राजपुताना ) सुप्रसिद्धस्य क्रान्तिसदनस्य इन्द्रप्रस्थनगरस्य समीपे एव वर्तते । अस्मिन्नेव प्रदेशे चासीद् विराटस्य विराटनगरी येदानीं **'बैराठ'** नाम्ना ग्रामरूपे स्थिता विद्यते । अत्रैवासीद् भगवतः श्रीरामचन्द्रस्य कुशनामकस्य अपत्यस्य राज्याधिकारः । अज्ञातवासमाचरतां पाण्डवानां शरणप्रदोऽयमेवाभूत् प्रदेशः । अयमेव प्रदेशो मत्स्यनाम्ना पुराणेषु कीर्तितो वर्तते । अत्रैव सुप्रसिद्धस्य वैय्याकरणस्य श्रीभर्तृहरेः समाधिस्थानं वर्तते । अत्रेदानीं विद्याप्रचाराय राजर्षिकॉलेजः स्वीकृतः । प्रतापहाईस्कूल—यशवंतहाईस्कूल—हार्वेमिडलस्कूल—मौडलस्कूल—संस्कृतकॉलेज—आदिराज्यस्वीकृता विद्यालयास्तथा अन्येऽपि जनताया विद्यालया महाविद्यालयाश्च सांति । रामाग्निवर्स्विदुविक्रमसंवत्सरे

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



( १८३२ सं. व. ) श्रीमन्तः रावप्रतापसिंहजीमहोदया राज्यमिदं संस्थापयामासुः । यथेयं लोकोक्तिः ।

"अष्टादश तेतीसमे अरि सिर ढोल बजाय ।
श्रीप्रतापमहाराजने गढजीते सब धाय ॥"

एवं गच्छति काले अत्र क्रमशः श्रीवन्नावरसिंहजी—विनयसिंहजी—शिवदानसिंहजी—मंगलसिंहजी—जयसिंहजी—इत्यादयो नरेश्वराः समभूवन् । इदानीं सप्तममनुष्येश्वराः **श्रीमन्तस्तेजसिंहाभिधाना** अलवरमधिराजन्ते ।

एतेषां जन्म अलवरस्य सुप्रसिद्धस्य भानास्थ श्रीचन्दपुराग्रामे मधुमासस्य कृष्णचतुर्थ्यां सप्तर्तुग्रहेन्दुमिते ( १९६७ ) वैक्रमे ह्यभूत् । एभिर्जयपुरनगरे शिक्षा प्राप्ता । मृदुभाषिण इमे **संस्कृत**—हिन्दी—आंग्लादिषु प्रकाण्डपण्डिताः सन्ति । अत्र राज्ये राज्यभाषा अपि हिन्दी एव वर्तते इति सर्वेषां राज्यानां प्रमुखपदम् । प्रजापालने प्रथितयशसः कलितललितदेहाः याचककल्पद्रुमाः सुधांशुरिव सुषमाधिकाः श्रीमन्तः अलवरमेदिनीन्द्राः सर्वदा स्मरन्ति भर्तृहरेर्भणितिम् ।

राजन् दुधुक्षसि यदि क्षितिधेनुमेनाम्
तेनाऽद्य वत्समिव लोकममुं पुषाण ।
तस्मिंश्च सम्यगनिशं परिपोष्यमाणे
नानाफलैः फलति कल्पलतेव भूमिः ॥

नूनं "आदानं हि विसर्गाय रीत्या अलवरेन्द्राः सर्वदा प्रजायै शुभभावनां धारयन्ति । एभिः स्वभाषणे कथितमासीत् यद् "प्रजा ही हमारा शरीर है हमारी आत्मा है । प्रजा की शक्ति हमारी शक्ति है । प्रजा की उन्नति ही हमारी उन्नति है ।" प्रजा एवास्माकं वपुरात्मा शक्तिश्च प्रजाया उन्नतिरेव आस्माकीना वास्तविकोन्नतिर्वर्तते ।

श्रीमदलवरेश्वराः शिशूनां सह प्रणयप्रवाहमभिवर्धयन्ति अमन्दानन्दविलसितम् । प्रजायै पुत्रवदाचरन्तीमे । एभिर्गतमासेषु विश्वविद्यालयाय

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



-कोट्यधिकं दानं दत्तमस्ति । दयार्द्रहृदया: करुणावरुणालया: सुरसरस्वती-समर्चनबद्धादरा इमे संस्कृतप्रचाराय प्रोद्यता अस्मिन्नेवाब्दे संस्कृतमहाविद्यालया-ध्यक्षपदे **महामहोपाध्याय गिरिधरशर्मचतुर्वेदा**नायोजयितुमामंत्रयन् । श्रीमहाराजा नगरतो ७ मीलदूरे विजयमन्दिरनाम्नि स्थाने वसन्ति । श्रीमहाराजानां प्रतापसिंहजी–यशवन्तसिंहजीकुमारौ त्रयो दुहितरश्च सन्ति । वयं सकलकलाकलापफलयितारं सकलकलुषकर्तनपरं कर्तुमकर्तुमन्यथाकर्तुं प्रभवं भगवन्तं विश्वनाथं सुतमभ्यर्थये यदि मे प्रजारञ्जनपरा गुणगणगरिमाविभूषिता: श्रीमदलवरनरेन्द्रा:

स्वस्तिर्भवेत् कुशलक्षेम चिरायुपूर्णा
गो–वाजि–दन्ति–धन–धान्य–समृद्धियुक्ता ।
नित्यं स्थिरा सुकमलाविमलाविलासो
भूयात् सुपुत्रगुणगौरवता विशाला ॥

इति.

अस्मदुक्ताशीर्वचनावलयनुसारं कुशली चिरं भवतु ।

---

# योगीश्वर:

श्रीरवींद्रनाथठागोरमहाशयानां फलसंचयनतोऽनूदित:
अनुवादक: पण्ढरीनाथशर्मा सहसम्पादक:

---

कस्मिंश्चन गिरिगर्भे एकान्तमनोरमं विविधरमणीयं नितान्तप्रशान्तं एकमाश्रमपदम् । तत्र चोपान्त एव स्वादुशीतलसुरभिसलिलसुभगा इन्द्रनील-मणिखनीव द्रवीभूय प्रवहन्ती नीलाम्बरपट्टिकेव वसुन्धराया मंगलसूत्रमणि-मालेव त्रैलोक्यलक्ष्म्या भगवती पावनतमा सवितृतनया यमुना धीरगम्भीरं मन्दंमन्दं प्रवहतिस्म ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कुल्कुल्कुल् इति कोमलकलनादवाचालवीचिमालाः प्रवाहमध्याव-स्थितोत्तुङ्गगण्डशिलाखण्डान् विष्वगभिव्याप्य मृदुलमाहत्य विशकलिता नैकाभिः स्रोतःशाखाभिः तनुतरपरीवाहसरणिषु ससंकटं परिभ्रम्य असंख्यानेव नितम्बिनीजननाभिसनाभिगभीरावर्तगर्तानुत्पाद्य सविभ्रमं कुटिलगत्या प्रवहन्तिस्म। नैका एव तनुतनवः मीनशिशवः विमलचपलसलिलाद् उत्प्लुत्योत्प्लुत्य प्रस्तर-फलकोपरि निपत्य विलुठ्य पुनः सलिलगर्भे सवेगं स्खलन्तिस्म।

एवं मरुल्लीलोत्ताललोलल्लहरीलुलितकल्लोलजालोच्छलत्सीकरनिकरसिंच-नार्द्रपृष्ठे उच्चतमविशालप्रस्तरफलकपीठे समुपविश्य कश्चित् मन्दमन्दगन्धवहः स्तनन्धयलीलान्दोल्यमानेषदरुणकान्तजटाकलापः परितः प्रसरता उदर्चिषा ब्रह्मवर्चसा अतनीयसा तपस्तेजसा अनणीयसा शरीरमहसा वदनसुषुमापुषा चक्षुषोस्त्विषा च तेजःपुञ्ज इव भासोराशिरिव धामनिधिरिव चालक्ष्यमाणः शान्तमूर्तिः प्रसन्नमुखमुद्रः ध्यानावस्थितो योगीश्वरः परं 'ब्रह्म' ध्यायन्नासीत्।

तदानीं च कश्चित् तदीय एव शिष्यः यक्षाधिपलक्ष्मीप्रतिक्षेपदक्षैश्वर्येण समृद्धः योगीश्वरः पुनरनतितरसाधारणीमेव भक्तिमाबिभ्राणः श्रद्धाभरानति-कन्धरः सैश्वर्यावलेपं समुपसृत्य योगिराजं प्रणिपतनपुरस्सरं प्रार्थयामास।

स्वामिन् श्रीमत्पादपरिचर्यासमुत्सुकोऽयं सेवकः। भवद्योग्यताननुरूपमपि हीनमपि स्वयोग्यतानुसारं कमप्युपायनं समर्प्य कृतार्थीबुभूषति। तदेतत् शिष्यवात्सल्येन श्रीमन्तोऽत्रभवन्तः स्वीकुर्वन्तु कृपया प्रतिगृण्हन्तु प्रेम्णा अनुगृण्हन्तु च माम् प्रमोदेन। इति च वदन्नेव चञ्चच्चारुचामीकरचकासद्-रुचिचाकचक्यप्रतिहतावलोचकलोचनप्रभं कंकणयुगलं गुरुवरपुरस्तात् सश्रीमदं निक्षिप्य गांभीर्येणावतस्थे।

स योगीश्वरोपि शनैर्नयनकुड्मले निमील्य पंकेरुहशंकामंकुरयता पाणिना प्रभापुंजपिंजरितदशदिशं तत्रैकं कंकणवरं गृहीत्वा परितः परिवृत्य अवलोकयितुमुपचक्रमे। एवं समन्दहासं समीक्षमाण एव तस्मिन्योगिचक्र-चूडामणौ अकस्मादेव स विकस्वरकार्तस्वरभास्वरः रुचिररुचिनिचयोपचय-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



चञ्चच्चारुमुक्ताफलखचितः प्रत्युप्तप्रयत्नान्विष्टनैकविधकौस्तुभसपत्नप्रत्नतनराजि-कान्तिकान्तः इन्द्रचापरुचिचारिमचौर्यचञ्चुरनानावर्णच्छविच्छटाच्छाच्छः अनर्घ्य-कंकणवरः योगिवर्यकरकमलात् युगपत् कथमप्यवितर्कितं प्रभ्रश्य प्रच्युतः सहसा अपारवारिराशावेव अपतत् ।

स श्रीलः तत्क्षणे एव हृतासुरिव ससंभ्रममुड्डीय सवेगमुत्प्लुत्य स्रोतसि न्यपतत् । तत्र च चिरकालं निमज्य निमज्य कर्णविवरवदनकुहरनासिकारन्ध्र-प्रविष्टशीततोयधारं निरुद्धश्वासोच्छ्वासं अन्तरान्तरा च निपीतनीरपिचण्डिलोदरं च पुनःपुनः उद्भ्रान्तारक्ततरलतारकं ब्रुडयन् अन्विष्यन्नपि नोपालभत तत् कंकणं बहिश्चरप्राणायमानद्रविणमणिगणः स श्रीलः । इतो योगिवरो निर्विकारः प्रसन्नः शांतचित्तो यथावद् भगवन्नाम जपन्नेव आसीत् ।

ततः स लक्ष्मीपुत्रो निराशो नितरां सन्तप्तश्च भूत्वा योगिनमुपसृत्य तेजोहीनदीननयनं सगद्गदमप्राक्षीत् । महाशय स कंकणवरः कुत्र वा पतितः प्रदर्शय तत्स्थानं पुनर्निमज्य प्रयते अन्वेषयानि चेति, तदुपश्रुत्य स योगिराट् स्वपुरस्थितमपरमपि कंकणमुद्धृत्य पश्य पश्य तत्र तत् कंकणं पतितम् इति वदन् तदपि कंकणं तत्स्थानं निर्दिशन् वारिणि प्राक्षिपत् । इति.

---

# श्रीशंकरानंदसंस्कृतपाठशाला कर्की

अयि प्रियपाठकमहाभागाः! निश्चप्रचमिदं यद् धर्मत एव उत्तमसुख-प्राप्तिरिति । “सुखं तु न विना धर्मात्” इति हि स्मृतिः। धर्मो हि वेदमूलः । वेदश्च भगवतो निश्वासरूपः । स च षडंगसहितः । सर्वोप्ययं ग्रन्थराशिः तथा एतदर्थोपबोधकः पुराणोपपुराणादिर्वा संस्कृतभाषायामेवोपनिबद्ध इत्येतत्तु सर्वेषा-मक्षरमुखानामपरोक्षमेव । संस्कृतभाषा च परमोपकारिणी भारतीयसर्वभाषाजननी कासांचिदजनन्यपि सर्वथाआधारभूता सर्वविधयंत्रमंत्रतंत्रादिशास्त्रमूलतया अत्या-दरणीयेत्यत्र न विप्रतिपत्तिः एतदादि सर्वमपि सम्यगालोच्य महाजनसाहाय्य-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



माश्रित्यैव पाठशालासमितिरियं प्रतिष्ठापिता । सांप्रतमस्मिन् विद्यालये पंचत्रिंशदन्यूना विद्यार्थिनः संति । अभ्यासक्रमः सप्तवार्षिको विहितः । तत्र च प्रथमे वर्षद्वये प्राथमिकः अभ्यासः । माध्यमिकः अभ्यासस्ततो वर्षत्रये भवति । उत्तमोभ्यासस्ततो वर्षद्वये भविता । आहत्य सप्तसु वर्षेषु अभ्यासः समाप्यते । संस्कृतभाषायाः प्रचुरप्रचारद्वारा स्वधर्म—स्वसमाज—स्वदेश—शिष्टाचारपरंपरादिसंरक्षणदक्षाणां परिशुद्धाचारप्राप्यतेजोभास्वराणां ब्रह्मतेजस्विनां तरुणानां निर्माणमेव संस्थायाः प्रधान उद्देशः । अस्मिन् विद्यालये वेद—कर्मकाण्ड (तत्तद्गृह्यसूत्रादि) ज्योतिष—व्याकरण—न्याय—मीमांसा—साहित्य—वेदान्तादिकं पाठ्यते । कालानुगुण्येन पाठ्यग्रन्था नियोक्ष्यन्ते । ग्रामान्तरादागतानां विद्यार्थिनां कृते स्नानभोजनादिसौकर्यं ग्रामस्थितैर्महाजनैः कर्तव्यत्वेन निर्धारितं ऊढं च । प्रतिवर्षं फाल्गुनकृष्णपक्षे परीक्षा प्रचलति । श्रीश्रीमदाद्यशंकराचार्यजयंतीमहोत्सवावसरे परीक्षोत्तीर्णेभ्यः छात्रेभ्यः पारितोषिकं दीयते तदैव वार्षिकी सभा च । इदानीं वर्षद्वयस्येतिवृत्तं एकदैव प्रकाशयितुमुद्यता अपि संस्था मधुरवाणीप्रियपाठकानां नीरसतापादनं स्यात्किमिति भिया संक्षिप्यैव निरूपयति । गते वर्षद्वये च येये महोदाराः साहाय्यमन्वतिष्ठन् तेषां तेषां सर्वेषामपि नामानि अत्र उल्लेखयितुं नैव शक्यानि तथा च सर्वेभ्योऽपि तेभ्यः साभिनन्दनं सानन्दं सहस्रशो धन्यवादान् समर्पयिष्यति विद्यालयः ।

तत्र च राणेबेन्नूरु, हानगल्ल, हावेरी, बंकापूर, शिग्गावी, धारवाड, गदग, बेळगांवप्रभृतिनगरविद्यमाना महाजना महत्साहाय्यमाचरन् । वी. जी. जोशी प्लीडर, गुण्डेराव लक्ष्मण दीक्षित, मूर्तिनायक शंकर नायक काशीकर, गिरिशास्त्री दत्तूशास्त्री काशीकर, श्री. जयरायाचार्य कल्लापूर, होंबळ रामदीक्षित हुरळीकोप्प कृष्णभट्ट, जोशी नारायणभट्ट, मादेव नायक, नाडगेर नीलकण्ठ, एन्. पी. भागवत प्रभृतयः ।

तथा च बेळगांवनगरे वरिष्ठन्यायासनमलंकुर्वाणाः (इदानीं पुणेनगरे) सुरसरस्वतीलक्ष्मीकृपाकटाक्षभाजनीभूता विद्वत्प्रवराः पुरुषोत्तम मंगेश लाड

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



आयू. सी. एस्. डि. जज्ज महाभागाः तथा कुरुन्दवाडसंस्थानाधीश्वराः (१-२) शिक्षक महाविद्यालये ( बी. टी कॉलेज ) निवृत्तप्रधानाध्यापकाः रँग्लर पी. एस्. कट्टि महोदयाः, वाकीलप्रवरा बी. एन्. दातार महोदयाः, अभिनवभट्टबाणा एम्. पी. वाली एम्. ए. महाभागाः, एस्. आर. भट प्रोफेसरमहाशया, वैद्यरत्न वाटवे महोदयाः श्री. बी. व्ही. पोतदारमहाशयाः श्री. बी. बी. पोतदारमहाभागा इतिहासभूषणाः पी. जी. रानडे प्रभृतयश्च। एतेभ्यः सहायकेभ्यो महोदारेभ्यः सर्वेभ्यः श्रीपार्वतीपतिः परमेश्वरः आयुरारोग्यैश्वर्यादि श्रेयो दद्यादित्याशास्महे।

## प्रथमे वर्षे ( १९४५–१९४६ ) संक्षिप्ता आयव्ययपत्रिका

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| महाजनसकाशात् | | | | उपाध्यायवेतनं | ३०८ | ० | ० |
| 'वर्गणी'रूपेण प्राप्तं | ३८८ | ० | ० | विद्यार्थिनां पुस्तकार्थे | १० | ३ | ० |
| अन्यत् | १६० | ० | ० | अन्यत् | ४२ | ० | ० |
| आहत्य | ४४८ | ० | ० | आहत्य | ३६० | ० | ० |
| | | | | अवशिष्टम् | ८७ | १४ | ० |

## द्वितीये वर्षे

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| पूर्वावशिष्टम् | ८७ | १४ | ० | उपाध्यायवेतनम् | ४३८ | ० | ० |
| वर्गणीरूपेण प्राप्तं | ३२४ | ४ | ० | विद्यार्थिपारितोषिकं | ३० | ० | ० |
| इतरत् | १६९ | १२ | ० | मधुरवाणीपोषकार्थे | १० | ० | ० |
| | | | | इतरत् | ८४ | ९ | ० |
| आहत्य | ५७७ | १४ | ० | आहत्य | ५६२ | ९ | ० |
| | | | | अवशिष्टम् | १६ | ५ | ० |

प्रधानाध्यापकः खरीत्युपाह्वो रामचन्द्रशास्त्री.

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मोहमय्याम्

# अखिल भारतवर्षीय संस्कृतसाहित्य-संम्मेलनस्य महाधिवेशनम्

आयि गीर्वाणवाणीप्रियाः !

भवन्तो जानन्त्येव यद् गतेऽब्दे 'दशाम्बर' मासे जयपुरे अखिल-भारतीयसंस्कृतसाहित्यसम्मेलनस्य अष्टादशमधिवेशनं महता समारोहेणाभूदिति।

तस्मिन्नधिवेशने कतिपयमित्राणां संस्कृतप्रियाणां सम्मत्या संस्कृत-प्रचारकविद्यालयस्य तात्कालिकप्रधानाध्यापकमहोदयश्रीशिवनाथशास्त्रिवर्यद्वारा मया 'सम्मेलनस्यागाम्यधिवेशनं मोहमय्यामेवास्तु' इति निमन्त्रणं प्रहितमासीत्। तच्च समेषां सम्मत्या स्वीकृतमभूत्।

मम त्वाशाऽऽसीद् यद्गतेऽष्टाम्बरमासे ( दीपावल्यवसरे ) अधिवेशनमिदं सानन्दं सम्पन्नं भविष्यतीति। तथैवाऽऽशया मया तस्य प्रचारोऽपि समारब्ध आसीत् परञ्चावसरेऽस्मिन्ननेके विघ्नाः समुत्पन्ना आसन् येषु प्रधानतमो विघ्नः साम्प्रदायिकः ( हिन्दु-मुस्लिम ) कलह एव।

अशान्तेऽस्मिन्विषमे समयेऽखिलभारतीयविदुषामैकत्रीकरणस्योत्तर-दायित्वं कथमस्माभिः स्वीकर्तुं प्रभूयेत। अत एवाधिवेशनं स्थगितमासीत्।

आशास्यते यन्मासद्वयस्याभ्यन्तर एव साम्प्रदायिको विषमः कलहः शमेष्यतीति। तत्कालमेव च प्रचारकार्यमपि समारब्धं भविष्यति। एव-ञ्चागामिदीपावल्यवसरे महाधिवेशनमत्र कर्तुं वयं समर्थाः स्याम।

अस्माकमस्ति वाञ्छेनेयं यन्मोहमय्यां भविष्यदिदं संस्कृतसाहित्य-सम्मेलनस्याधिवेशनं चिरस्मरणीयं, रमणीयमेवमादर्शपूर्णं भवतु इति।

भावत्कः—
**गोविन्दवल्लभ शास्त्री.**
श्रीरामचन्द्रशास्त्री संस्कृत प्रचारक विद्यालये
११६ सागर भुवन भूलेश्वर कबूतर खाना मुम्बई.

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



## आसीमभावालंकाररसविलासः

# कालिदासः

(सं. पाठकोपनामकः पण्ढरीनाथ शर्मा)

इह जगति सर्वेषामेव प्राणिनामियं स्वाभाविक्यभिवाञ्छा यत्कथमपि आनंदं अधिच्छामः । तदर्थं हि ते दिवानिशं प्रयतन्ते । परं नानाविधप्रयत्नपरास्ते आनन्दमनधिगम्यैव तिष्ठन्ति । तत्र किं परमार्थतः आनन्दसाधनमिति विचिकित्सायां एवमेव समाहितं मनीषिभिः यत् "सुललितपदविन्यासात्मकं काव्यमेव" । प्रायः सहृदयानां प्रवृत्तिः काव्ये एव । काव्यं न केवलमानन्ददायकं किन्तु चतुर्वर्गफलसिद्धिदमपि । यदुक्तं चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि काव्यादेव....

निखिलजनपदमौलिमुकुटायिते भारते भूयांसः कवयः प्रतिदिनं समुत्पद्यन्ते बहुनराश्च विलीयन्ते परं विरलाः खलु शारदशशिप्रभाभास्वरेणामरेण कीर्तिकायेन जीवमानाः कवयः । ये केचिदासन् तेषां समेषां आदिकविः "वाल्मीकिः" रामचरितसंवलितं "रामायणं नाम महाकाव्यं विरचयामास । ततः द्वापारावसाने व्यासेन महर्षिणा कुरुपाण्डवमधिकृत्य ग्रन्थराजं महाभारतं प्रणायि । अनन्तरं कलौ कालिदास–भवभूति–भारवि–हर्षप्रमुखाः कवयः भारते सम्भूय सुललितपदबन्धैः सदुपदेशैश्च स्वीयां चातुरीं प्राचीकटन् । तत्रोपहर्तुमिच्छामो वयं प्रियपाठकमहोदयेभ्यः कविकुलगुरोः कालिदासस्य संक्षेपतः वृत्तम् ।

कविरयं कस्मिन्समये कस्मिन्देशे वा भारतभुवं विभूषितवानिति नावबोद्धुं शक्यते । यतोऽनेन महाकविना यत्रकुत्रापि स्वदेशकालादिविषये न प्रकथितम् । प्रायेणहि महाकवयः स्वात्मपरिचये उदासीना अक्षिलक्षीभवन्ति । अत एव तेषां समयनिर्धारणे पुरातत्वज्ञाः विपश्चितः कृतिभिः शिलालेखादिभिश्च देशकालादेः विनिश्चयं विदधति ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



तद्यथानुश्रूयते आसीत् किल कालिदासः कस्यचित् ब्राह्मणपुत्रः। बाल्ये एव तं विहाय पितरौ मृत्युं विगाहयाञ्चक्रतुः। रूपगुणसम्पन्नोऽप्यसौ बुद्धिहीनः कालिदासः विदुषीं विद्यावतीं परिणिनाय। अथ विवाहादूर्ध्वं रहसि विमूढं तं परिज्ञाय प्रकुपिता विद्यावती तं वाक्शरक्षेपैः तिरश्चकार। कालिदासोऽपि व्रीडान्वितः वनमेत्य तपसा कालीं संतोष्य प्रतिभां समाधिगम्य पुनर्गृहं ययौ। समागतं तं विद्यावती पप्रच्छ "अस्ति कश्चिद्वागर्थः" इति। कालिदासेनापि प्रश्नगतं प्रतिशब्दं गृहीत्वा क्रमेण कुमारसम्भवम्, मेघदूतं, रघुवंशश्चेति काव्यत्रयं प्रणायि।

किंदेश्योऽसौ कविरित्यत्रापि नैकमत्यम् ऐतिह्यविदां। केचन उज्ज-यिनीप्रभृतिस्थलविशेषवर्णनान्मालवीयः हिमवद्भागस्य वर्णनात् पर्वतीयः। पूर्वोक्तां दन्तकथामालोच्य काल्याः दासत्वात् वङ्गीयः इत्थं परे। परं बहवः किल आमनन्ति कविरयं उज्जयिनीवास्तव्यः।

कविकुलभालतिलकायमानः कालिदासः कस्मिन् समये कस्य राज्ञः सभां व्यभूषयदिति समस्यातिविषमा धीमतां सदस्यपि। परं बहवः गवेषकाः कालिदासः उज्जयिन्यां विक्रमादित्यस्य राजसभायां राजकविर्बभूवेत्यामनन्ति। तदुक्तं "धन्वन्तरिक्षपणकामरसिंहशंकुवेतालभट्टघटकर्परकालिदासाः। ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य।

अपरमपि कालिदासस्य समयनिर्धारणे ६३४ तमख्येशवीयाब्दस्य "आयहोल" स्य शिलालेखः साहाय्यं विदधाति। तत्रहि।

येनायोजि न वेश्मस्थिरमर्थविधौ विवेकिना जिनवेश्म।
स विजयतां रविकीर्तिः कविताश्रितकालिदासभारविकीर्तिः॥

अत्र कालिदासस्य भारवेश्च सहैव वर्णनेन इमौ कवी सप्तमशतकस्या-रंभे स्वजन्मना भारतमेदिनीं समलंचक्रतुः इति ज्ञायते। कालिदासः पंचम-शताब्याः पूर्वार्द्धे प्रथमकुमारगुप्तसमये भारते पप्रथे इति प्रसिद्धाः ऐति-हासिकाः स्मिथमहोदयाः। परं बहवः पण्डिताः पुरातनार्वाचीनाश्च कालिदासः विक्रमसंवत्स्थापकस्य उज्जयिनीनायकस्य विक्रमस्य नवसु रत्नेषु अन्यतमं रत्नमासीत् इति मतमेव प्रमाणीकुर्वन्ति।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



अयः कालिदासाः अभवन्निति गवेषकाः—

एकोऽपि जीयते हन्त कालिदासो न केनचित् ।
शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु ॥

कालिदासकृतत्वेन प्रसिद्धा ग्रन्थास्तु चत्वारिंशत्संख्याकाः सन्ति । तेषु प्रसिद्धतमाः महाकाव्ये "कुमारसम्भवम्—रघुवंशश्चेति द्वौ । खण्डकाव्ये" ऋतुसंहारम्—मेघदूतश्चेति द्वौ, नाटकेषु विक्रमोर्वशीयम्—अभिज्ञान-शाकुन्तलम् चेति त्रयः ।

यद्यपि संस्कृतकाव्यसंसारे भारविमाघहर्षभासशूद्रकवाणादयो कवि-कर्मनिवर्हणमहाकीर्तयः कवयः अभूवन् परं विरलः खलु भूतले सरसमधुर-पदविन्यासायाः सरस्वत्याः प्रियतमत्वं उपयातः कालिदाससदृक्षः कविः । विज्ञजनेषु कालिदासस्य यादृशी समज्ञा वरीवर्ति न तादृशी अन्येषाम् । नहि किल सर्वेषां सर्वस्मिन्विषये समा प्रतिभा । अेके अलंकारेषु, अपरे अर्थविस्ताररचनाचातुर्येषु, अन्ये सुललितशब्दकदम्बवन्धेषु स्वीयां चातुरीं प्राचीकटन् । परं कालिदासः उपमायान्तु सर्वानपि कवीनतिशेते । तदेवोक्तम्—

उपमा कालिदासस्य भारवेरर्थगौरवम् ।
नैषधे पदलालित्यं माघे सन्ति त्रयो गुणाः ॥

न ह्येतत् वक्तुं शक्यसंभवं यन्नासीत् कालिदासस्य अर्थगौरवे पदला-लित्येच प्रतिभा, किन्तु यस्मिन् यो गुणः प्राधान्येन वर्तते तत्र तस्यैव निर्देशः इत्यभिप्रायेणोक्तं उपमा कालिदासस्येति । अस्य कवेः सर्वजनप्रसि-द्धत्वे प्रधानं कारणं तस्य भारतीयसंस्कृते गरीयान् अनुरागः एव । कालि-दासस्य काव्यरसपीयूषधारापानसक्तः कश्चिदेवं प्राह—

कालिदासकवितां नवं वयः एणमांसमबलां च कोमलां ।
स्वर्गशेषमुपभुञ्जते नरा माहिषं दधि सशर्करं पयः ॥

कालिदासः स्वीयप्रतिभाबलेनैव स्वकीये काव्ये भावादिकं निवेशयामास। सरस्वती तु तस्य वशगा काव्यविरचनविधौ सुललितशब्दकदम्बावलिः स्वय-मेव तमनुगतासीत् तदुक्तम्—

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



" कविता वनिता चैव स्वायाता रसदायिनी ।
बलादाकृष्यमाणा चेत् सरसा विरसायते ॥

किमधिकं कालिदासस्य न केवलं काव्यरचनाकौशलं किन्तु वेदान्त–न्याय–सांख्य-योग-व्याकरणायुर्वेद-ज्योतिष-पदार्थविज्ञान-लोकाचार-राजनीति-व्यवहारनीतिइत्यादिषु शास्त्रेषु असाधारणा गतिरासीदिति तद्ग्रन्थप्रवचनविधौ निःशङ्कमेव शक्यते वक्तुम् । केचन असमीक्ष्य कारिणः यौरोपीयस्य कवेः यशसा सहैव कालिदासं तुलयन्ति परं मन्ये: तत्र तैः अनन्वयालंकार एव शरणीकरणीयः कालिदास इव कालिदासः । उक्तं च—

पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासा ।
अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूव ॥

कालिदासस्य रचना प्रसादगुणरञ्जिता, अक्लिष्टा च । अल्पसंस्कृतज्ञोऽपि कालिदासस्य भाषां ज्ञातुं शक्नोति रघुवंशस्थाः सिंहदीलीपसंभाषणं, कौत्सरघुसमागमः, इन्दुमतीस्वयंवरः अजविलापः इत्यादिसंनिवेशाः विचकर्षन्ति सहृदयवतां हृदयानि ।

कालिदासस्य स्वानुभूतिसम्भूतं खण्डकाव्यं मेघदूताभिधम् । इदमेव कालिदासस्य कविमण्डलीमूर्धन्यतां प्रमाणयति । अत्र यादृशं अकृत्रिमभावेन सौंदर्यावतरणं कविना कृतं इति न तिरोहितं प्रज्ञाशालिनां प्रज्ञवर्याणाम् ।

कालिदासस्यामरकृतिः "अभिज्ञानशाकुन्तलम्" सर्वनाटकानां शिरोरत्नमस्ति । तदुक्तम्—

काव्येषु नाटकम् रम्यं तत्रापि च शकुन्तला ।
तत्रापिच चतुर्थोऽङ्कः तत्र श्लोकचतुष्टयम् ॥

यत्र शकुन्तलायाः पतिगृहयात्रावेलायां कृतं अरण्यवास्तव्यान वीतरागाणां मुनीनां मानसस्य चोत्कृष्टं वर्णनं करुणरसस्य अनुपममुदाहरणम्। तत्र खलु कवित्वशक्तेः पराकाष्ठा समजनि । को वा न सहृदयः प्रसङ्गमिमं अधीत्य तन्मयो न भवेत् । यदा " सर विलियमज्योन्साख्येन विदुषा तस्यानुवादः अकारि तदा दृष्ट्वा तमनुवादं परं विस्मयमापन्नाः यौरोपीयाः कवये

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कालिदासाय "भारतीय शेक्स्पीयर" इति बिरुदं ददुः। अलमधिकेन यतः यो हि साधारणजनमनःकलिका विकासयितुं समर्थः तं साकल्येन वर्णयितुं कः समर्थः। तथापि अल्पमतिना मया यथासामर्थ्यं वर्णितम्। अहो धन्यमेतत् भारतवर्षम्। यस्मिन् आसीमभावालंकाररसविलासः कालिदासः समजनि इति शम्

जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।
नास्ति येषां यशः काये जरामरणजं भयम्॥

---

# विद्यालयगता

हित्वा प्रातर् मृदुलशयनं चक्रयानं प्रयुज्य
मंदं यान्तीं पठनवसतिं मुग्धहासान् क्षिपन्तीम्।
स्निग्धालापैः प्रणयमुखरैर्वर्ण्यमानां कुमारैः
मुग्धां विद्यालयगतसुतां को न कांक्षेत नूनम्॥ १॥

निर्गच्छन्तीं पठननिलयाद् दीर्घपाठावसाने
घंटाघोषैश्चकितपथिकान् वारयन्तीं पुरोगाम्।
रम्योदासां पठनजनितक्लेशभारेण खिन्नाम्
मुग्धां वाञ्छेत् मधुरवचनां को न कॉलेजकन्याम्॥ २॥

सायंकाले रुचिरवसनां केशभूषां विधाय
वक्षोभागे गलितवसनां यौवनं दर्शयन्तीम्।
क्रीडन्तीं ताम् सह युवहृदा लीलया कन्दुकेन
मुग्धां विद्यालयगतसुतां को न कांक्षेत नूनम्॥ ३॥

[ कविः—माथुरेयः ]

पाठक पंढरीनाथशर्मा—जुन्नर

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



# चमत्कारच्छटा

लेे.—पं. शिवरामशास्त्री शिन्त्रे, काव्यालंकारभूषणः

अयि रसिकाग्रेसरा मधुरवाण्याः पाठकाः। प्रारम्भे किञ्चित् प्रास्ताविकं विलिख्य मध्ये खण्डितोऽयं व्यवसायः पुनरारभ्यते। पञ्चषवर्षेभ्यः प्रागेव मम 'काव्यलक्षणम्' एतदाभिधानः प्रबन्धो मधुरवाण्यां प्राकाश्यत। तदनन्तरं पत्रिकाया अल्पपत्रत्वाद्विषयबाहुल्याच्च विस्तीर्णलेखाय नावसर इति पर्यालोच्य चमत्कारच्छटाख्यो मदीयः प्रबन्धो मया प्रकाशनाय प्रेषितः। अग्रे द्रव्यादिसाह्यवशादयं ग्रन्थः स्वतन्त्रतयापि प्रकाश्येत। अस्मिन्निबन्धे पञ्चत्रिंशदधिका द्विशती छटानां वर्तते। आस्मिन्विनोदेन सहैव समाजस्य सामाजिकानां च दोषा व्यङ्ग्मर्यादयैव प्रकटीक्रियन्ते। संमोहनास्त्रमुद्दिश्य 'न चारहिंसा विजयश्च हस्ते' इति यथा श्रीकालिदासेनोक्तं तथैवेदृशलेखने 'प्रबोधनं स्यान्नच वैरजन्म। एतादृश्यवस्था जायतेऽयं महाँल्लाभः। एतासां प्रारम्भे "अमरुककवेर्यथैकः श्लोको भवति प्रबन्धशततुल्यः। शिवरामस्यैकैका छटा तथा लघुकथायेत" ॥१॥ इति मदीयोऽभिप्रायः प्रकटीकृतः। अन्ते च 'नानाविषयसंयुक्ता वक्तृकीर्तनरञ्जिकाः। आदायैताच्छटा धीरा बोधं मोदं च विन्दताम् ॥२॥ इति फलनिर्देशो मया कृतोऽस्ति। प्रत्यङ्कं पत्रद्वये मदीयच्छटाप्रकाशनं मधुरवाणीसंपादकैः प्रतिज्ञातमासीत्। बहूनां चायमुपक्रमो रुचितः। परन्तु मध्ये दुर्विधिवशान्नितरां कार्श्यमापन्ना पत्रिका। संप्रति कालानुकूल्यात्पुनः प्राप्तोत्साहो मन्यमानोऽहमितोऽग्रे काश्चन च्छटाः समुपहरामि। प्रथमामारभ्य पञ्चचत्वारिंशत्तमीं यावच्चमत्कारच्छटा मधुरवाण्यां सप्तमवर्षीयैकादशाङ्कात्प्रभृति (व. ७-११), अष्टमवर्षीयनवमांकपर्यन्तं मुद्रिताः सन्ति। अतः षट्चत्वारिंशत्तीछटादौ दीयते।

॥ ४६ ॥

एकदा केनचिद् देवमन्दिरस्य व्यवस्थापकेन 'पादत्राणे अत्र स्थापनीये'

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



इत्याघोषणपत्रिकां निर्माय तस्याः पृष्ठदेशे भित्त्यासञ्जनाय निर्यासद्रव्यं विलिप्य च क्षणमन्यत्र गतम्। एतावति काचिन्नितम्बिनी तस्याः पत्रिकायां क्षणं विश्रम्योत्थायच मार्गेण गन्तुमारभत। तस्या नितम्बाच्छादनलग्नां तां पत्रिकां वाचयित्वा पश्चादागच्छन्तो नराश्चिर्वीयमाणाः कुक्षिपीडनावध्यहसन्। अनभिज्ञा सातु तथैवाखिलं मार्गमत्यक्रामत्।

॥ ४७ ॥

कोऽपि रङ्गाजीव उत्तररात्रोत्थितो रक्तवर्णपूर्णां पात्रीं हस्ते धृत्वा शौचविध्यर्थं ग्रामाद् बहिरगमत्। प्रत्यागच्छंश्च प्रकाशवशाद्वामहस्ताग्रं सुतरां लोहितं वीक्ष्य सत्वरं गृहमागतो भार्यां प्राह। भार्ये नूनं ममान्त्रं स्फुटितं तेन गुदद्वाराद्रुधिरस्रावो भवति पश्येमं ममाग्रहस्तमिति। सातु तत्करे स्थितां पात्रीं दृष्ट्वा हसन्त्यवदत्। अयि भोः। इयं कौसुम्भपूर्णा पात्री त्वया मलप्रक्षाल्याय नीता तेनेदं संवृत्तम्। निर्भयो भवेदानीमिति।

॥ ४८ ॥

ग्राम्यः—भो भिक्षुवर त्वं मांससेवनं करोषि। तव साधुताया अपीदं युक्तरूपम्?।

भिक्षुः—आः किमनेन केवलमांसेन?। मद्यरहितं मांसं न मह्यं रोचते।

ग्राम्यः—अपि त्वं मद्यमपि पिबसि?।

भिक्षुः—एकाकिना मद्यपाने न सुखविशेषः। गणिकाभिः परिवेवेष्टितोऽहं ताभिर्दत्तमेव सुराचषकमभिनन्दामि।

ग्राम्यः—वेश्यास्तु धनकामाः। कुत्रास्ति ते धनम्?।

भिक्षुः—मैवं मंस्थाः। द्यूतकर्मणा चौर्येण वा प्राज्यं धनं संपादयामि।

ग्राम्यः—रेरे भिक्षुस्त्वं द्यूतचौर्ययोरपि प्रसक्तस्तर्हि?।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भिक्षुः—धर्मभ्रष्टः स्वजनबहिष्कृतश्च वृत्तिमपि न लभे । ततः किमन्यत्कुर्याम् ? ।

॥ ४९ ॥

कश्चिद्राष्ट्रगोपो दुर्भाषणशील इति बहुभिर्ग्रामीणैः प्रान्ताध्यक्षसभायामसकृन्निवेदितम् । ततः कदाचित्प्रान्ताध्यक्षो वादिप्रतिवादिपक्षावाहूयापृच्छत् । भो राष्ट्रिय किं त्वमेतान्ग्राम्यान्सदा शपसीति । ततः स सक्रोधमाह । किं रे जाल्म । दास्याः पुत्र । गर्दभजात । ग्रामकण्टक । कदा त्वं मया शप्तः ? । अनन्तरं प्रान्ताध्यक्षमवेक्ष्य प्राह । भो राजपुरुष । एते जारजन्मानो दुष्टा जाल्मा ग्राम्यापसदा मिथ्यावादिनः । एते तस्करा वृथैव मामभियुञ्जते । तथा न्यायनिर्णयावसरेऽन्यप्रमाणापेक्षा प्रान्ताध्यक्षस्य नाभवत् ।

॥ ५० ॥

खण्डशर्माः—भोः सुहृत् ! त्वमद्यैकादशीदिने प्रस्फुटं ताम्बूलं चर्वसि ! नेदमुचितम् ।

बण्डशर्माः—मित्र ! पलाण्डुदुर्गन्धनिवारणार्थमेलायुक्तं ताम्बूलं चर्वामि ।

खण्डशर्माः—किमद्य हरिदिने पलाण्डुरपि सेवित : ? ।

बण्डशर्माः—तर्हि तेन विना पर्युषितमभ्यूषं कथमसेविष्ये ? ।

खण्डशर्माः—अद्य दिने पर्युषितमभ्यूषमपि सेवितवानसि जाल्म ! ।

बण्डशर्माः—कान्या गतिः ? । तच्छुना स्पृष्टमासीत् । न चेत्स्वयमखादिष्यं गृहजनो बहिर्मार्गेऽक्षेप्स्यत् ।

॥ ५१ ॥

बहुकर्मव्याकुलः कश्चित्पुरोहितः आत्मनो ज्येष्ठपुत्रं कस्यचिद्यजमानस्य कन्याया विवाहकर्मणि नियोजितवान् । अमङ्गलवागसौ व्यवहारज्ञानशून्यो मूढो विवाहमण्डपं दृष्ट्वाऽवदत् । अयि भोः ? वंशच्छेदनं सुष्ठु विहितमिति । तदानीं कुपिता वैवाहिकास्तं प्रतिनिवर्त्य वंशखण्डहीनमभिनवं मण्डपमकारयन् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यजमानेच्छानुरोधात्पुरोहित आत्मनो द्वितीयपुत्रं पौरोहित्याय प्रेषयत्। स तु नवं विवाहमण्डपं निरीक्ष्याह। हन्त! इदानीं तु निर्वंशो मण्डपो जात इति। तदमङ्गलार्थं वचनं श्रुत्वा कन्यापिता साक्षात्पुरोहितमाग्रहेणानाय्य तत्पुत्रयोर्भाषणे अकथयत्। तयोः पिता त्वभाषत। इतानींतनी प्रजेत्थं निर्बुद्धा यत्स्वार्थमपि न जानाति। वरो म्रियतां वधूर्वा म्रियतां किमेतयोर्वृथाभाषणेन?। विवाहवेदीसमीपे स्थित्वा दक्षिणाग्रहणमेवैताभ्यां कार्यमिति। तदाकर्ण्यानुवंशिकमेतेषाममंगलभाषित्वमिति सर्वे विविदुः।

॥ ५२ ॥

भार्याः—(उषसि शय्यास्थं पतिम्) स्वामिन्! किं विवर्णमिव तव वदनम्?। किमस्वस्थप्रकृतिरत्रभवान्?।

पतिः—रात्रौ सा न समागतेति पीडामनुभवामि। किं तु तव वदन किं विवर्णतां गतम्!।

भार्याः—(साभ्यसूयम्) रजन्यां स नायातस्तेन भृशदुःखिताहम्।

पतिः—सेर्ष्यम्) दुष्टे! कोऽयं स तव नायातः?।

भार्याः—ननु तवापि का सा, या रात्रौ न समागता?।

पतिः—धूर्ते! सा नाम निद्रा नागता। मान्यथा चिन्तय।

भार्याः—तथा ममापि स नामोष्णवारणो वायुः। किं वृथा शङ्कया?।

॥ ५३ ॥

एकदा नदीतीरं प्राप्तौ राजा राज्ञी चात्मनो नैपथ्यादिकमवतार्य परिहासिकस्य स्कन्धेऽवस्थाप्य च जलक्रीडार्थं नद्यां प्राविशताम्। तदानीं नृपः परिहासबुध्या तं प्रावोचत्। भद्रमुख! इदानीं तवोपर्येकस्य गर्दभस्य भारो जात इति मन्ये। प्रत्युत्पन्नमतिः स विदूषकस्तु शीघ्रमवोचत्। महाराज! मम स्कन्धोपरि गर्दभद्वयस्य भार इदानीं वर्तते इति। तन्निशम्य राजा तूष्णीं स्थितः।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



॥ ५४ ॥

राजाः—भो मन्त्रिन्! मम नगरेऽद्य कियन्तो वायसाः सन्ति तच्छीघ्रं कथय।

सचिवः—महाराज! अस्माकं नगरे संप्रति पंचात्रिंशदधिक-सप्तशतोत्तर-चतुर्दशसहस्राधिक-द्विलक्षमिताः काकाः।

राजाः—परिगणिता न्यूनाश्चेत्किं ब्रूयाः?।

सचिवः—तावन्तः काका ग्रामान्तरं गता इति मन्तव्यम्।

राजाः—अथाधिकाश्चेत्?।

सचिवः—तावन्तः प्राघूर्णिका अत्र समागता इति निश्चेतव्यम्।

॥ ५५ ॥

यस्य शिरो लघु श्मश्रूणि च दीर्घाणि स मूर्खो मन्तव्य इति कस्मिन्नपि ग्रन्थे वाचयन्कश्चिद्यवनो मनसि व्यचिन्तयत्। मम शिरो लघु, तत्तु न परिवर्तनीयम्। द्वितीयं तु मूर्खत्वचिह्नं दीर्घश्मश्रूणि। तन्न्यूनीकुर्याम, इति। अथ स क्वापि कर्तरीमलभमानो मुष्टिमितं श्मश्रुमूलं करे धृत्वा शेषं दीपशिखायां प्राज्वालयत्। अन्ततस्तु करे दग्धे मुष्टिर्भिन्नोऽखिलमेव श्मश्रु च निःशेषं दग्धम्। स्वमूर्खत्वप्रत्ययस्तस्य सद्य एवागतः।

॥ ५६ ॥

कृपणः—भार्ये! वृथा पुष्पस्रजः क्रयणाय पणकचतुष्टयव्ययं मा कुरु।

भार्या—नैतदत्रभवता दत्तमस्ति। ह्यः सुवासिनीभोजने यजमानायाः सकाशान्मया दक्षिणात्वेन लब्धं वर्तते।

कृपणः—भद्रे! तदपि मदीयमेवास्ति। यद्यहं ह्योऽनाजीविष्यं तर्हि का त्वां सुवासिनित्वेऽप्ययोजयिष्यत्?। तत्तावच्चिन्तय।

॥ ५७ ॥

पिताः....पुत्रहतक! षण्डशर्मन्! त्वं चिरमशुभभाषी वर्तसे। तन्नाहं त्वा लीलाया विवाहसमये नेष्यामि।

षण्डशर्माः—तात! लीलायाः साक्षात्कनीयान्भ्राताहं, तत्कथं ननीयते?।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पिता—त्वं विवाहसमारंभे ह्यमङ्गलवाचा विघ्नमुपद्रवं च करिष्यसि ।

चण्डशर्मा:—तात मैवं भेतव्यम् । अहं केवलं पिण्डप्रमाणमोदनं जग्ध्वा क्वचित्कोणे प्रेतवत्स्वप्स्यामि ।

॥ ५८ ॥

तरला:—मया द्वादशसु वर्षेषु पौराणिकमुखाद्रामायणं श्रुतं । नाहमत्र-भवतीव केवलं संसारमग्ना ।

सरला:—आमेवं ? । तत्कथय सीतायाः कैकेय्याश्च कः संबन्धः ? ।

तरला:....श्रवणकाले कार्पासवर्तिकानिर्माणव्यग्रासम् । तदेतन्न सम्य-क्स्मरामि । किन्तु रामस्य सीता कनीकसी स्वसेति स्मर्यत एव । नात्र संदेहः ॥ [ सरलाप्रहसति ]

# आयहोल

" आयहोल " इत्यत्र कस्मिंश्चन शिलालेखे येनायोजि इति इति पद्यं वर्तते । तेन कालिदासकालनिर्णये उपक्तमिति लेखकः श्रीमान् पाठकः पण्ढरीनाथशर्मा उल्लिखति । आयहोल इत्युल्लेखे यथार्थतः स्थितान्यक्षराणि " ऐहोळी " इति । स्थानमिदमितिहाससंशोधकानां परमोपकारकं सुप्रसिद्ध-मनितरसाधारणमप्रतिममवश्यं द्रष्टव्यं च विदुषाम् । इदं हि कर्णाटके विजयपुरमंडले सुप्रसिद्धाद् बागलकोटिनगरान्नातिदूरे मलप्रभासरित्तटे विद्यते । अद्यापि तत्र नैका देवालया अतिविशाला महत्तरशिलानिर्मिता विविधशिल्पि-शिल्पागण्यनैपुण्यनिकषायमाणाः प्रेक्षकाणामन्तरंगाणि किल विस्मापयंति । वातापिपुर ( बादामि ) राजधानीविभ्राजितानां वसुन्धरापुरन्दरायमाणानां अखिलसामन्तमौलिमालाललितपदसरसिजानां जगज्जेतॄणां श्रीवीरवरेश्वगणां श्रीपुलकेशिमहाराजानां समयमारभ्य कर्णाटकविजयवैजयन्ती अखिलजगत्कर्ण-ताटंकायमानकीर्तिशालिनी आसीदिति इतिहासविदो वदंति ।

ऐहोळि इति कर्णाटकभाषापदस्य आयहोलइति विकृतस्वरूपपरिणाम-मवलोक्य विवरणमिदं दत्तमित्यलम् ।

कर्णाटकप्रियः

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



# श्रीसुमध्वविजये शृंगारः

## कवेर्नैसर्गिकवर्णनं च

लेखकः—वाल्मीकिसत्यसंधाचार्यः—भद्रावती

अयि भो रसिकाः प्रियपाठकमहोदयाः,

पेपीयमानां, विविधैर्वार्तातरंगैः परिशोभितया, मधुरवाण्या निष्यंदिनीं वचःसुधां निजनेत्रश्रवणांजलिपुटैः परमादरेणाहरहः पिबंतो भवंतः परमानंदतुंदिला लसंति किलेति विदिनमेव तत्रभवताम् । भवादृशानाम् विद्वारोचितेऽस्मिन्नपारे पारावारेल्पस्यमेऽवसरो न दृश्यते । यतो योग्यताविरहात् । तथापि मम धीमौनं नाश्रयते । परं तु प्रचोदयति मामधैर्यशालिनमपि बलवर्ती प्रगल्भवर्ती वनितेव । अधुना क उपायो मया कल्पनीय इति चिन्ताम्बुधौ निमग्नस्य मे मम तात पादैः सकृदुदाहृता वाणी मम स्मृतिपथमागता तदा मामकीं शंकामपाकृतवती बभूव । का सा वाणीति निरीक्ष्यमाणानां भवतामकुंठोत्कंठाकुंठे कौस्तभं बिभ्रतो भार्गवीवल्लभस्यानुग्रहेणाधुना परिहरामि । सेयमेव भारती । "न ह्यपारे पारावारे तिमितिमिंगिलादिविहारे तीरोपांतेन चलति किं निश्चितश्चिलिचिमः" । अपारे सागरे "तिमिंगिलगिलोप्यस्ति तद्गिलोप्यास्ति राघवः" । इत्युक्तरीत्या बहवो बलीयांसः जंतवः संति । तथापि तीरप्रदेशे चिलिचिमादयः स्वयोग्यतानुसारेण विहरंत्येव । तथाहमपि मम योग्यतानुसारेणास्मिन्नपारे वारावारे तीरोपांत एव संचरामीति निश्चित्य मामकीं लेखनीं चालयामि । भवंतः क्षमाशीला मे दुर्नयं क्षाम्यंतु ॥

काव्यप्रधानलक्षणेषु रसोप्येकतमः प्रधानलक्षणो वर्तते । रस्यते आस्वाद्यते साध्विति रसः । रसशब्दो हि प्रायो वेदे सोमरसजलादिवाचको वर्तते । "रसो वै सः । रसं ह्येवायं लब्ध्वानंदी भवति" । इति तैत्तरीयोपनिषदि च रसशब्दः आनंदार्थकः प्राप्यते । कः कविःप्रथमं रसनिरूपणं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



चकारेति प्रायशः शंका संजायते सर्वेषां । भरतमुनिप्रणीते नाट्यशास्त्रे रसनिरूपणं कृतं भवति । श्रीमद्वाल्मीकिरामायणे करुणारसं पश्यामः । तस्मात् भरतमुनितोऽपि प्राचीनाचीर्णा रसोत्पत्तिः । रसविर्भावकालो यदा कदा वा भवतु । किंतु रसप्राधान्यमंगीकुर्वंति किल कवयः काव्येषु । रसावश्यकता रुद्रटेनेत्थं वर्ण्यते स्वीये काव्यालंकारे । "तस्मात्तत्कर्तव्यं यत्नेन महीयसा रसैर्युक्तं । "दंडिना चोक्तं" मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः । येन माद्यंति धीमंतः मधुनेव मधुव्रताः । " काव्यप्रकाशे रसः काव्यस्यात्मत्वें प्रतिपादितः । श्रीबादरायणेनापि श्रीमद्भागवते रसप्राधान्यमुररीकृतम् । तदिदमेव

मिगमकल्पतरोर्गलितं फलम्
शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं
मुहुरहो रसिका भुवि भावुकाः । "

इत्थं विचार्यमाणे तु काव्ये रसस्यावश्यकता निर्विवादा भवितुमर्हति । तस्माद्रसः कुत्र वर्तते । रसाविर्भावं किं । तेषु प्रधानतमो रसः कः । रसाः कतिविधाः इत्यादीन्विचारयामस्तावत् । नवसु रसेषु प्रधानतमं शृंगाररसोपेतं काव्यमेव सर्वे सोत्कंठं पठंति । कारणंतु तदेव हृदयाल्हादजनकं रोम्णां हर्षणवारि च विद्यते । तन्निरुक्तमपि केचनेत्थं वर्णयंति । शृणाति चरमदशाप्रापणेन हिनस्ति कामुकानिति शृंगं मन्मथोद्भेदः शृहिंसायां शृंगमृच्छति प्राप्नोतीति शृंगारः । कविकुलगुरोः कालिदासस्य कृतयः शृंगाररसोद्रिक्ताः सत्यः अध्येतॄनानंदांबुधौ निमग्नान् कुर्वंतीति विदितमेव सर्वेषां । बहुरत्ना वसुंधरा " इत्युक्तरीत्या पुण्येस्मिन् भारतभूतले कालिदाससदृशाः कवयोभूवन्निति तेषां प्रथानां विमर्शनेन निर्णेतुं शक्यते । शृंगाररसाविर्भावविषये कालिदासवन्नैपुण्यं पुष्णात्ययम् कवितल्लजः श्रीनारायणपंडिताचार्यः ।' नेयमुत्प्रेक्षा ऽथोस्वित्स्वकपोलकल्पना । उभयोः कव्योर्वर्णनावैखरीं दिङ्मात्रं विमर्शनेन स्फुटीभविष्यति । तदिदमेव विचार्यते उत्तरत्र । प्रथमतः शृंगाररसः कथमुद्भवतीति पश्यामः । तत्प्रकारस्तु " ऋतुमाल्यालंकारैः प्रियजनगांधर्वकाव्यसेवाभिः । उपवनगमनविहारैः शृंगाररसः समुद्भवति । " एतेषां

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वर्णनानि यत्र क्रियते तत्रैव श्रृंगाररसः स्रवति । "यः करोति स्वयं काव्यं कल्पयित्वा वृथा कथां । तच्छ्रमो व्यर्थतामेति तदध्यायी च दोषभाक्" इत्युक्तमभिप्रायं मनसि निधायैव श्रीनारायणपंडिताचार्यः भगवत्सान्निधानोपेते विष्णुलोके मुक्ताः कथमानंदमनुभवंतीति वदन् एकादशे सर्गे श्रृंगाररसनिष्यंदिनीं कथां कथयति । षड्ऋतवः मुक्तानां कथमानंदं संपादयंतीति क्रमशः विशदयति ।

## वसंतऋतुवर्णनम्

वसंतकाले वनितासहाया वल्लभाः मोदमानास्संतः वसंतऋतुना जायमानमानंदमनुभवंतीति वदत्यस्मिन् पद्ये प्रमिताक्षरावृत्तघटिते ।

(१)

स्मितमाधवीकुसुमरम्यतरौ
नवचंपकादिकुसुमोर्हसितौ ।
मधुमाधवौ मधुपगीर्मधुरौ
मधुजित्प्रियान् प्रमदमानयतः ॥

(२)

## ग्रीष्मऋतुवर्णनम्

अभीष्टतमः वल्लभः ग्रीष्मर्तौ जातां मल्लिकाकुसुममालां कबर्यां बद्धुमुद्यतां रमणीं प्रेक्ष्य हे रमणि त्वं बद्धुं न वेत्सीति वदन् तां मालामादाय तस्या अभिमुखे स्थित्वा स्वतः कबर्यां कराभ्यां बध्नन् बंधनव्याजेन स्ववक्षसा निजकांतायाः स्थूलकुचावाश्लिष्य मोदते ।

नवमल्लिकास्रजमभीष्टतमः शुचिसंभवाम् प्रणयिनीशिरसि ।
कलयन् स्वयं न कुशलेति किल प्रतिघट्टयत्युरुकुचावुरसा ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



## वर्षर्तुवर्णनं

वर्षर्तौ मेघध्वनिं श्रुत्वा मयूरा मनोहरस्वरं कुर्वंतः नृत्यंतीति प्रसिद्ध-मेव । मयूरनर्तनं वर्षर्तोर्लक्षणं । नर्तनसमये बर्हाण्याविष्कुर्वंति । तदंगेषु नयनसदृशानि वर्तुलानि प्रकटीभवंति । तैश्च सहस्रनेत्रा इव मयूराः प्रतीयंते ।

मधुरस्वरास्ततगतत्रतति
प्रकटांतपंक्तिधृतनेत्ररुचः ।
शिखिनोनुयांति हि सहस्रदशम्
जलदर्तुलक्ष्मनि अनृत्तमहे ॥

## शरदृतुवर्णनं

मुक्तजनः उल्लसत्कुवलयेक्षणया, विकचारविंदरुचिसमनया, शोभन-शुकस्वनया मुखरहंसकया शरदा रमते ।

शरदोल्लसत्कुवलयेक्षणया
विकचारविंदरुचिराननया ।
प्रियया च शोभनशुकस्वनया
रमते जनो मुखरहंसकया ॥

## हिमंत-शिशिरऋतुवर्णनं

फलिनीनाम कश्चिद्गुल्मविशेषः । फलिन्याः कुसुमयन् शिशिरऋतुः विकसितनूतनकुंदपुष्पाणां कांत्या हसतीव विभाते । स्फटिकाचलवत् नीहारेणाधिकृतं हिमऋतुमभिनंदयन् शिशिरः हसतीव विभाते ।

अभिनंदयन् हिम ऋतुं सुसरखा
स्फटिकाचलच्छलहिमाधिकृतम् ।
फलिनीकुलं कुसुमयन् शिशिरो
हसतीव फुल्लनवकुंदरुचा ॥

षड्ऋतूनामपि वर्णनं मनोरमया रीत्या कृतं विराजते वाचकवृंदानां

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



मनोनयनानां विदितमेवाधुनेति किं वक्तव्यं ।

" उपवनविहारैश्च शृंगाररसः समुद्भवतीति विचार्यते—

स्त्रियः स्वपतिभिः साकं वने सुखोद्रेकात् हरिचरितम[illegible]लं गायंते—

प्रमदातिरेकमुपयातवता
प्रमदागणेन चरतोपवने ।
उपगीयतेस्म मधुरं मधुजि
द्दुरितं सकांततितिना सततम् ।

उत्तमाः स्त्रियः स्ववल्लभाभिमुख्ये नृत्यंति । अतिकोमला अन्या ललनाः कुसुमानि छिंदंति । अन्या मानिन्यः माला विरचयंति काश्चन पतीननुरंजयंति ।

ललना ललंत्यभिवरं प्रवरा
ललिता लुनंति कुसुमानि पराः ।
इतराःस्रजो विरचयंति पती
ननुरंजयंति न तु काश्चन नो ॥

तरुणा वनेषु स्त्रीभिः सह तत्र संचारैः जना नानाविधक्रीडाः कृत्वा लता-भवनेषु स्तनभारनतास्तरुणीः परिरभ्य मुखचुंबनं कुर्वंतः सुरतक्रीडां कुर्वंतीति विशदयति ।

वनलीलया विविधया मुदिताः
तरुणा घनस्तननतास्तरुणीः ।
सुलतालयेषु परिरभ्य रतिम्
वदनारविंदमधुपा दधति ॥

वनलीलानंतरं ललना ध्वनिविशेषकारिभिः सारसाक्षिभिरिव प्रतीयमा-ननूपुराख्यपादभूषणैर्भूषिताः पतिभिः सह सरोवरसमीपं गत्वा अमृतांबुनि विगाह्य जलताडनं कृत्वा हसंत्यः क्रीडंति

रसिकाः सुधाप्सु सरसीषु ततो
ऋतुनूपुरानुकृतसारसकाः ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



विहरंति साकमवगाह्य धवै
र्जलमंडुकोत्सवहसद्वदनाः ॥

## मधुपानवर्णनम्

नानाविधक्रीडानंतरं नार्यः गृहमुपेत्य पतिभिः सहामृतं पिबंति ।

तनुमध्यमा निजगृहाणि गताः
सममात्मना मसुसमैरसमैः ।
अमृतं पिबंत्यसुलभं भविभि
श्चषकैर्महारजतरत्नमयैः ॥

भगवल्लोके सुखी को वा रमणः स्वरमणीं न रमयेत् । सर्वोपि रमयदेवेत्यर्थः ।

पृथुवृत्ततुंगकठिणोरसिज
द्वयवारितायतभुजांतरयोः ।
भुजयोर्युगेन रमणो रमणीम्
परिरभ्य कोत्र रमयेन्न सुखी ॥

इतो विचार्यमाणानां पद्यजातानां विमर्शनेन शृंगाररसानिरूपणनिपुणानां महाकवीनां तुलनां कविकुलतिलकोयं पंडिताचार्योपि प्राप्नोतीत्युररीक्रियते विपश्चिद्भिः ॥

## रघुवंशे नवमेसर्गे पानवर्णनम्

ललितविभ्रमबन्धविमोक्षणं सुरभिगन्धपराजितकेसरम् ।
पतिषु निर्विविशुर्मधुमङ्गनाः स्मरसखं रसखण्डनवर्जितम् ॥

सुन्दरस्त्रियो ललितविलासरचनाप्रवीणं मनोहरगन्धानिर्जितबकुलद्रुमं कामोद्दीपकं मधु पतिषु स्नेहभंगरहितं परस्परांनुरागपूर्वकं पतिभिः सह पपुरित्यर्थः ।

## मध्वविजये पानवर्णनम्

तनुमध्यमा निजगृहाणि गताः सममात्मनामसुसमैरसमैः ।
अमृतं पिबन्त्यसुलभं भविभिश्चषकैर्महारजतरत्नमयैः ॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



स्त्रियः प्राणप्रियैः सह रत्नखचितसुवर्णात्मकचषकैः संसारिभिरलभ्यममृतं पिबंति। पानस्य साधनसापेक्षत्वाच्चषकैरित्युक्तिः अन्यत्रैतन्न दृश्यते।

रघुवंशे पुष्पं चूर्णकुन्तले दधुरित्याह

हुतहुताशनदीप्तिवनश्रियः प्रतिनिधिः कनकाभरणस्य यत्।
युवतयः कुसुमं दधुराहितं तदलके दलकेसरपेशलम्॥

घृतादिभिः प्रज्वलितानलप्रभातुल्यं उपवनलक्ष्म्याः सुवर्णालंकारस्य प्रतिनिधिभूतं पत्रेषु परागेषु च सुकुमारं प्रियैः प्राप्तं कर्णिकारपुष्पं कुन्तले दधुरिति।

मध्वविजये

नवमल्लिकास्रजमभीष्टतमः शुचिसंभवां प्रणयिनीशिरसि।
कलयन् स्वयं न कुशलेति किल प्रतिघट्टयत्युरुकुचावुरसा॥

नवमल्लिकाकुसुममालां केशपाशे बद्धुमुद्यतां रमणीं वीक्ष्य हे रमणि त्वं बद्धुं न वेत्सीति वदन् बन्धनव्याजेन स्ववक्षसा तस्या उरुकुचावाश्लिष्य मोदते इति।

रघुवंशे

अनुभवन्नवदोलमृतूत्सवं पटुरपि प्रियकण्ठजिघृक्षया।
अनयदासनरज्जुपरिग्रहे भुजलतां जलतामबलाजनः॥

नूतनदोलं वसंतोत्सवं चरितार्थयितुं स्त्रीजनो निपुणोपि प्रियकण्ठमालिंगितुमभिलषन् पीठरज्जुग्रहणे भुजलतां शिथिलामकरोत्।

मध्वविजये

अनुपालिताः स्वदयितैर्दयिताः कथमप्युपेत्य कुचभारनताः।
शनकैः पुनस्तदवलंबबलात् किल ता विशंति परमोपवनम्॥

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



इमा ललनाः स्वदयितैः कदा आगमिष्यन्तीति प्रतीक्षिताः कुचभारेण विनताःकथंचिन्महता प्रयासेन पतिसन्निधिमाप्य पश्चात् पतीनामाश्रयबलात् मन्दंमन्दमुत्तमोत्तममुद्यानं प्रविशंति। रतनभारनतत्वेन पतिभिः सह शीघ्रं गन्तुमशक्ताः पुरतो गच्छद्भिः स्वपतिभिर्निरीक्षिताः पतिसमीपं प्राप्य ततः पतिहस्तावलंबनेन शनैश्शनैः शृंगारवनं प्रविशंतीति।

पूर्वोदाहृतपद्यानां तुलनात्मकविमर्शेन श्रीनारायणपण्डिताचार्यकृतावपि शृंगाररसस्वारस्यमस्तीति केषांचित्पद्यानामवलोकनेन सद्यः परनिर्वृतिर्जायते चेत् तदा किं वक्तव्यं उत्तमकाव्यस्यास्य संपूर्णावलोकनेन परानिर्वृतिर्भवतीति विदुषाम्। कवेर्निसर्गशोभावर्णनचातुरीमपित् प्रदर्श्य लेखोयमुपरम्यते।

## बदरिकाश्रमवर्णनम्

हिमवर्षरविप्रभासहाः पृथुमत्तप्रथिता द्विजाश्रयाः।
अपि विष्णुपदस्पृशोल्लसन्नुभये यत्र विचित्रशाखिनः॥
श्रवणामृतगीर्गणैर्द्विजैश्शुकमुख्यैः शुभपक्षिभिर्युतम्।
कमलेष्टतमस्थिरांतरैरपि हंसैः परमैरमेचकैः॥

सूर्योदयवर्णनं कृत्वा उदितसूर्यस्य किरणास्सर्वदिक्षु कथं प्रसारिता-इत्यालंकारिकभंग्या प्रकटीकरोति।

( मालिनीवृत्तं )

मधुरपतगरावाः शांतनैशांबुबाष्पाः
सपदि विपुलरागाः स्वाभिसारात्प्रसन्नाः।
अरुणतरणिरत्यच्छांबरा दिक्पुरंध्रीः
स्मितसरसिजवक्त्राः स्वैः करैरालिलिंगे॥

उद्यदादित्यः, श्रोत्रेंद्रियप्रियाः पतगरावाः शांतनैशांबुबाष्पाः, रात्रौ सर्वदिशि

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पतितं हिमं सूर्योदये सति नश्यतीति प्रसिद्धं । उद्यदादित्यसंपर्कसमय एव विपुलरागाः, स्वाभिसारात् (स्वकिरणाना प्रसारात्) शांततुषारतया निर्मलाकाशाः, विकासितकमलान्येव वक्त्राण्यासां ताः । स्मितसरसिजवक्त्राः, दिक्पुरन्ध्रीः, स्वैः करैरालिलिंगे ।

## स्त्रीपक्षे

पुरंध्रयोऽपि कोकिलस्वराः, प्रियदर्शनानंतरं, प्रियविरहजखेदोत्पन्ननेत्राम्बु परिहृत्य, प्रियदर्शनादेवाभिव्यक्तविपुलानुरागाः, स्वकांताभिमर्शनात् शांतकोपाः, सुवसना विकसितकमलसंदशमुखाः [ अभूवन् ] पद्येनैकेन कं वा गूढाभिप्रायं स्फोरयति कविः, प्रापयतिच परनिर्वृतिं वाचकमहाशयानां ।

## सूर्यास्तमवर्णनं

उदयमित इवास्तं यंश्चभानुर्बभासे
स्फुटमकलुषरूपो दर्शनीयो नुरागी ।
शुचि हरिपदमापत्संपदोराश्रितानां
न हि भवति विशेषः स्वप्रकाशोन्नतानां ॥

स्वच्छरूपः सायंकाले सुखेन द्रष्टुं शक्यः संध्याकालीनरक्तिमावर्णविशिष्टः सूर्यः उदयकाले यथा निर्मलाकारः, सुखेन द्रष्टुं शक्यश्च तथैवास्तमानकालेपि तादृशगुणवानभूदित्यर्थः । यथा प्रसन्नरूपो दर्शनीयोनुरागी स्वकीयेषु स्नेहवान् कश्चित्पुरुषः विपदं प्राप्नुवन्नपि उदयं संपदं प्राप्त इव शोभते । नतु तत्र संकोचविकासौ दर्शयति । तद्वत्सूर्यः उदयास्तमयोरेकप्रकार एव शुशुभे । स्वप्रकाशेनोत्कृष्टानां सतां पुरुषाणामापत्संपत्कालेच संकोचविकासलक्षणविकारो न हि भवति । यथा श्रीहरिचरणमाश्रितानां सतामापत्संपदोर्विशेषाभावस्तथा [ विष्णुपदमाकाशं ] आश्रितस्य प्रकाशोन्नतस्य भानोरपि उदयास्तमयोर्विशेषाभावः, स्मारयति च कविः "तेजसां हि न वयः समीक्ष्यते" इति च, कस्याश्चिद्योषितः नितंबसंवीतनीलवस्त्रे अर्धं दृश्यमानः पद्मरागो यथा दर्शनीयो

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भवति तथा पृथिव्या द्वययोरपि नः समुद्रस्य नीलवर्णत्वात् समुद्राद्वयनीळवसने निमग्नोऽर्धं द्वयः लोहितसूर्यमंडलः प्रेक्षणीयोऽभूदिति सूर्यास्तमयसमयो वर्णितः।

मरकतमणिवर्णे भूनधात्री पुरंध्र्या
लसति जलधिवासस्यर्धलीनक्षणार्धे ।
अरुणतरणिबिंबच्छद्मना पद्मरागः
कपिशकरकलापो ह्यस्यभूत्प्रेक्षणीयः ॥

यादृशीं नैसर्गिकशोभां वर्णयति कविरिति वाचकमहाशयानां विदितमेव भवति । तस्मात् " तत्कर्ता च महाकवि " इत्युक्तप्रकारेण महाकविताशाखामारोहत्येव एषः श्रीपंडिताचार्यः ।

---

# मंगलाय मंगला मधुरवाणी

ले.—श्रीहरिहरेत्युपाख्या सौभाग्यवती यमुना बेळगांव

दिष्ट्या सांप्रतं विद्वद्वराणां विद्वत्तापूर्णलेखकलातः सुंदरमधुरवाणी सौन्दर्यं संवर्धयति । महतः कालात् प्रभृति अल्पज्ञया मया प्रियमधुरवाणीकृते किंचित् लेखनीयं इति मनसि कृतं सत् तथापि न प्रयत्नः कृतः । अध्ययनस्य अल्पत्वात लिलिखिषुरपि अल्पप्रज्ञा अहं संस्कृतभाषायां अल्पप्रयासेन प्रबन्धलेखनाय न समर्था इति विचार्य तूष्णीं आसम् । तथापि संस्कृतभाषाप्रीतिरेव लेखनप्रवृत्तये कारणमभवत् । आस्ताम् ।

प्रिया पूज्या मधुरवाणी सुरवाणी शास्त्रनिधिः रत्ननिधिः । यया अमरैस्सह अमृतं पीत्वा अमरत्वं संपादितं तस्या महिमा मया मर्त्यया अल्पज्ञया कथं वर्णयितुं शक्यः । तथापि यद्वस्तु प्रियं तन्महत्प्रयत्नेन अपि

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



रक्ष्यमाणं दृश्यते लोके तथा च अनुभूयते । वस्तुसदृशप्रयत्नः तद्वस्तुसंरक्षणाय योजनीयो भवति । अस्याः संस्कृतभाषायाः संरक्षणं नाम गीर्वाणवाणीप्रणयिभिः संस्कृतभाषाध्ययनाध्यापनवाचनप्रवचनानि कर्तव्यानि अस्याः संरक्षणाय ।

यदि यस्य इयं प्रिया मधुरवाणी सुरभारती प्रयत्नेन प्रसन्ना भवेत् तर्हि तस्य शास्त्ररत्नदिदृक्षोः कृतपुण्यस्य शास्त्ररत्ननिधिः सौकर्येण हस्तगतो भविष्यति । शास्त्रैकदृष्टिमनुष्य एव सदसद्वस्तुविवेकाय समर्थ आगमदीपप्रकाश-साहाय्येन । शास्त्रतः युक्तितः विद्वदनुभवतश्च यत् सत्यं तस्य सत्यस्य सत्यान्वेषणं एव मानवकर्तव्यम् । 'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः । भूतेषु भूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति' । इति केनोपनिषत् । यथा अस्मिन् मनुष्यजन्मनि सौकर्यं सत्यान्वेषणाय तथा अन्य-स्मिन् जन्मनि न सौकर्यम् । इति श्रुत्युक्तमेव । अतः प्रयत्नस्य आस्पदं अस्त्येव । शास्त्रार्थस्य अर्थवत्वात् मनुष्यः स्वतन्त्रः प्रयत्नाय । यादृग् यस्य अधिकारः तादृक् तस्य प्रयत्नः तरतमभावेन स्यात् तत्र का क्षतिः । श्रुत्युक्त-मार्गेण श्रद्धया च प्रयतमाने सति यदि देहपातः स्यात् तद् इष्टापत्तिः । स तदर्थे एव पुनर्जन्म आप्नोति । 'तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्' इति भगवद्वाक्यम् [ ततश्च स पूर्वजन्मार्जितसंस्कारसचिवः परमार्थाधिकारी भवति । अहो ईदृग् कल्याणी मधुरवाणी सुरभारती स्वतेजसा विराजमाना गहनाज्ञानति-मिरनिरासेन अमृतत्वं गमयति मनुष्यम् ।

इयं मधुरवाणी संचिका यथा धनं अपेक्षते तथा बुद्धिमतां विद्यार्थिनां बुद्धिवैभवस्य अपि । स्वसौभाग्यसंवर्धनाय अस्या अपेक्षा वर्तते एव । अतः गीर्वाणवाणीप्रणयिनः विद्वांसः संस्कृतभाषाप्रसारकर्तव्यं प्राप्तवन्तः योग्यताव-शात । इयं मधुरवाणी सर्वदा सर्वदा मंगला मंगलाय भवतु इति श्रीशं प्रार्थयित्वा पुनर्मंगलाय विरमामि ।

---

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



# "परोपदेशे पाण्डित्यम्"

लेखकः—नारायणमध्यस्थः, पेरडाल.

हन्त ! किमेतदापतितम् ? प्राक्तनै र्वसुमतीति प्रशंसिता भूरियमिदानीं महद्दुःखस्यायतनमास्ते । यदत्रान्नं कवलमात्रमपि दुर्लभमेव । सर्वेऽपि मानवाः अन्नाभावात् क्षुधार्ता असह्यं सङ्कष्टमनुभवन्ति । दारिद्र्याणान्तु गण्डस्योपरि पिटक इवेदं महद्दुःखम् ॥

कृषीवलानां शुभस्यागतनं निर्गतिकानाञ्च महत्क्लेशकारि वर्षं भूमौ वर्षति । समुल्लसन्ति च सस्यानि । उर्वरिता च विश्वम्भरा हरिद्वर्णवस्त्रालंकृतेव योषिन्नितरां विराजते । ग्रीष्मकाले च ये महीरुहवल्लच्छायानिवासिनो निर्गतिकाः भिक्षुकाः स्वकुटुम्बेन सह निराश्रया आश्रयं समन्विष्यन्तः पर्यटन्तिस्म ।

एकदा रामपुरीयसंस्कृतकलाशालां सायंसमये निराश्रयं किंचन याचकवृन्दं विवेश । न तत्राध्येतुमध्यापयितुं वा । किन्त्वनर्थपरम्पराऽश्रयभूतां रात्रिं तत्र कथं कथमपि यापयितुम् । तत्रापि प्रतिबन्धः शालाधिकारिणाम् । तेष्वन्यतमो महोपाध्यायबिरुदभाक् रामशर्मा । निरनुकम्पस्सच तान् प्रति पप्रच्छ सभ्रुकुटिबन्धम्—के यूयमिति ।

" वयं निराश्रयाः भिक्षुकाः अद्य रात्रिं कथमपि संयापयितुमत्रागताः स्मः ।" इति सविनयं साश्रु प्रत्युत्तरमदाद्याचकानामन्यतमः । " आः ! पापाः ! इयं न धर्मशाला । किन्तु कलाशाला । तस्मान्नात्र युष्माभिः श्वसदृशैर्वसतिः कार्या । अतस्त्वरितं गच्छत ।" इति स्वक्रौर्यं प्रकटयामास रामशर्मा ।

" स्वामिन् ! निर्गतिकोऽहं भवत्पादमूलमागतः । निराश्रयाणामाश्रयोऽस्ति भवान् ।"

"रे ! रे ! पाप ! किं ब्रवीषि ? ते स्तुतिवाक्यानि रुन्धि । अलम् ।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



गच्छ चपलम् । श्वन्! " ।

"स्वामिन्! दयालो! मुसलाकारं वर्षति वर्षम् । आर्द्राणि वस्त्राणि । थरथरायन्ति शीतबाधयाऽङ्गानि " ।

"अलं तव शुष्कया याचया । सर्षपमात्रमप्यत्र स्थलं ते दुर्लभम् । सत्वरं गच्छ । अन्यथा महत्कष्टमनुभविष्यसि " ।

"हन्त! कष्टम्! कथं गच्छामि निरातपत्रोऽहम्? " ।

"कथमागतोऽसि? तथैव गच्छ " ।

"अनाथबन्धो! मैवमस्मासु ब्रूयाः" इति निरुद्धकोकिलकलापा काचन षोडशवर्षदेशीया बालापि ययाचे । मंजुलस्वरां तां ददर्श रामशर्मा । अपात्रेऽपि तस्यां दृढमनुरक्तमभूत्तस्य हृदयम् । इत्थं विभावयामास रामशर्मा—अहो! विधेरस्थाने यत्नः । कुलशीलविहीनायामप्यस्याम लोकिकं सौन्दर्यं न्यधायि तेन महात्मना । अथवा किमत्र चित्रम्? पङ्के हि कमलोत्पत्तिः! बुभुक्षिता निरलंकारापि रमणीयं रमणीयतरा प्रतिभाति चक्षुषोर्मे । कालिदासोऽप्यवादीत्—सरसिजमनुविद्धं शैवलेनापि रम्यं मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति । इयमधिकमनोज्ञा वल्कलेनापि तन्वी किमिव हि मधुराणां मण्डनं नाकृतीनाम् " : इति । अथवा किमलंकारैः? स्वाभाविकमेव सौन्दर्यं मनोहरति । न त्वलंकारादिकृतकृत्रिमं सौन्दर्यं " । इत्यादि बहुधा पंचेषुसन्ततिसंचूर्णितमभूत्तस्य मनः । अहो! अपात्रेऽप्यादरः । साधु । खल्विदमुच्यते—"कामो वामः" इति ।

"स्वामिन्" रुरोध याचकवाचा रामशर्मणो निरर्गलां चिन्तासरणिम्। "किम्पुनश्चलदोष्ठोऽसि? न नेऽभ्यर्थनाऽङ्गीक्रियतेऽस्माभिः । " दृढमवदीद्रामशर्मा । "का गतिः?" इति ते कतिचन पदानि जग्मुः । रामशर्माऽपि स्वगृहं ययौ ।

तत्र च याचकानां मध्ये पूर्वोक्ता तरुणी स्फुरत्सौन्दर्यप्रभा पङ्के कमलश्रीरिव चकास्तिस्म । सा च रिक्ताभरणस्थानाऽपि स्वमंजुलमन्दहासन्यक्कृतशरच्चन्द्रचन्द्रिका प्रेक्षकाणां मनो हरतिस्म । छिद्रार्द्रवस्त्रेण सुष्टभिव्यक्तपुरकला-
व

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



वयवा च कामिनां हृदयशल्यं बभूव । गच्छन्ती च सा मुहुर्मुहुस्तस्य मनस्समाकर्षन्तीव स्मितमधुरकटाक्षं रामशर्मण्यपातयत् ।

रात्रौ च रामशर्मा, स्वगृहप्रासादे कस्मिंश्चन कोष्ठे किमप्यापठन्नासीत् । किन्तु तस्य मनः तामनुस्मृत्य कुत्रापि भ्रमदवर्तत । तदानीमेव स द्वारशब्दं शुश्राव । "कस्त्वम् ?" अप्राक्षीद्रामशर्मा ।

"अहम्" "नामतो ब्रूहि" "सरोजा" सत्वरमुत्थायोद्घाटयामास द्वारं रामशर्मा ।

"अरे किमर्थमागतासि ?" "अभ्यर्थिन्यस्मि"

"अत्र काचमपि न लभसे" "काचमुद्दिश्य नाहमागता"

"पुनः किमर्थम् ? "किञ्चन स्थानमभ्यर्थयिष्ये"

"नात्र सर्षपमात्रमपि स्थलं विद्यते" "बाह्यं स्थानं न मया याचितं"

"किं त्वमुन्मत्तासि ?" "सूक्तं भवता । भवन्तमदृष्ट्वोन्मत्तैवाऽहं"

"किं मद्दर्शनप्रयोजनं ?" "तव हृदये स्थानलाभः"

किं त्वं स्वैरिणी ?" "नन्वभिसारिकाऽस्मि"

"गच्छ !" "न गम्यते" "कुतः ?" "मम मनोभवताऽपहृतम्" "ममापि भवत्या" इत्थं प्रश्नोत्तरसरणिस्तयोरुदपद्यत । वर्षाकालत्वान्महान्वातस्समजनि । द्वारं स्वयमेव पिनद्धम् । निर्वाणश्च दीपः । सर्वतस्तमः प्रसृतम् ।

अतोत्थं स्मरामि कालिदासवचनं— नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण इति । यत्सम्यक्समृद्धमासीद्रामशर्मणस्सद्म तत्क्रमशो दारिद्र्यदशामुपायात् । यदा तद्गृहं सरोजा विवेश तदैव दरिद्रलक्ष्मीरपि । अलंचक्रिरे च हारवलयादीन्यलङ्काराणि सरोजाम् । वाराङ्गनापदवीमारूढा सा बाला । बलवच्चकर्ष रामशर्मणः चित्तं वितञ्च । स्वयमपि तदधीनेव विरराज ।

आसीत्सावित्री रामशर्मणः सहधर्मचारिणी । सा च धर्मेण भक्त्या च पतिव्रताशिरोमणिरित्यस्तूयत सर्वैरपि । तथापि ललाटलिखितं को वा मार्ज-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



यति ? भवितव्यमनुभवितव्यमेव ! भवभूतिस्तु—को नाम पाकाभिमुखस्य जन्तोर्द्वाराणि दैवस्य पिधातुमीष्टे इति सत्यमेवोवाच ।

विभवो न कस्यापि स्थिरः । स चैकदा भवति । अन्यदा गच्छति । ईदृशीं दशां रामशर्मापि लेभे सरोजासङ्गात् । को वा वाराङ्गनानुरक्तचेतसं वारयितुं शक्नोति ?

क्रमेण सावित्र्याः आभरणस्थानानि रिक्तान्यभवन् । कवलमात्रमप्यन्नं दुर्लभमेव । प्रावरितुं वासांसि जीर्णान्यपि न विद्यन्ते । क्रमेणासह्यवेदनं रुजमवाप सा कृशांगी । महद्दुःखमनुभवन्ती, मृत्युञ्च प्रतीक्षमाणा कथंकथमपि दिनान्यत्यवाहयत्सावित्री ।

अहो ! हृदय भवस्य निष्करुणता ! यद्विदुषोऽपि पीडयति सुममयगुरुतरशरसन्ततिभिः स प्रसूनबाणः । तथाऽस्माकं महोपाध्यायो रामशर्मापि सरोजाशरणोऽभूत् । स खलु दिवसे— "वेश्याः श्मशानसुमना इव वर्जनीयाः" इति विद्यार्थिनः पाठयन्; रात्रौ—"वेश्यास्त्रीदर्शनम् पुण्यम्" इति जपति स्म । तथाचासनालंकृतां सरोजां "श्रीमत्सरोज ! आसनसन्निविष्टे !" इत्यदिभिर्नवनवैः पद्यैस्समुपास्त रामशर्मा ।

प्रच्छन्नपि कदाचित्प्रकटीभवत्येव । एवं सरोजारामशर्मणोः प्रणयवृत्तान्तोऽपि सर्वतः प्रससार । सर्वेऽपि सहोद्योगिनो विद्वांसश्च तं निनिन्दुः । तथाः सावित्र्याः असह्यं दुःखमनुम्मृत्यानुकम्पाशालिनः परं बाष्पं विसमृजुः ।

एकदा मध्याह्नसमये स्वप्रेयसीं द्रष्टुकामो रामशर्मा संङ्केतस्थानं मधूदयनामोद्यानवनं प्रतस्थे । तदा चरणपतिता सावित्री तस्य गमनं रुरोध । तस्याश्शरीरं चिन्तया, निराहारतया, दुःखेन चातीव कृशमासीत् । तांच चरणयोर्निपत्याभ्यर्थयन्तीं निष्करुणमप्राक्षीद्रामशर्मा— "अरे ! प्रमत्ते ! गच्छन्तीं कुतो रुणत्सि ?" "प्राणकान्त ! मत्प्राणनिष्क्रमणानन्तरं यत्र कुत्रापि गच्छ" । "अद्य कर्तव्यं नान्यदा करणीयं विद्वत्त्वं प्रकटयामास महोपाध्यायः । अपि जीवितनाथ ! ममायुःपरिमाणं द्वित्रिनिमिषमात्रम् । तस्मादन्तिमां ते चरणसेवां निर्वर्तयिष्यामि ' 'अप्यसम्बद्धालापे ! दूरं व्रज !

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



गच्छाम्यहम् । कार्याणि बहूनि विद्यन्ते ।' 'मनोहर ! अद्य न गन्तव्यम्' 'धिक् अनार्ये ! ' इति अपरिगणय्याभ्यर्थनां पादेन प्रहृत्य क्रोधविस्फुरितेक्षणो जगाम रामशर्मा । मुमूर्च्छ च पादाक्रान्तमसहमाना सावित्री ।

मधूद्यवने च रामशर्माणं प्रतीक्षमाणा सरोजाऽऽसीत् । तञ्चागतं दृष्ट्वा कृतकं प्रणयकोपं प्रकाशयमास सा वारवनिता ।

'सरोजे ! ' 'किमिदानीमपि दासीस्मरणं जातं वा ?' 'यदि विस्मृतं, तर्हि स्मर । न मया विस्मृतं । सदा स्मरामि च ।' 'किं वा मत्स्मरणादीप्सितं ?' त्वदधरमधुरमधुपानमेव, निरतिशयसौन्दर्ये !

'आः ! क इत्थं ब्रवीति' रोषस्फुरच्चक्षुस्सरोजायास्ताततो माधवः पुरतस्तस्थौ तयोः। स खलु सरोजामपश्यंस्तां समन्विष्यंश्च तत्राजगाम। तदेदर्शी स्वस्नुतावस्थां दृष्ट्वा परं चुक्रोध । (तावत्पर्यन्तमनयोः प्रणयवृत्तान्तं ग्रामान्तरगतो माधवो न ज्ञातवान् । ) तं दृष्ट्वा च तौ भयात्थरथरायमाणाङ्गावास्ताम् । परन्तु विद्युद्वल्लरीव चपलं निश्चक्राम सरोजा ।

'महोपाध्याय ! निर्वित्तानामपि मान एव धनम् । धनादपि गरीयान्मानः । एवं सति दरिद्राणां मानापहरणं त्वादृशानां विदुषां न युक्तम् ।' इति वदन्माधवः पुनश्च सक्रोधं रे ! रे ! निष्करुण ! अधिकारप्रमत्त ! कुमारीकामुक ! कथं त्वमुपाध्यायोऽभवः ? किमेवमेव शिक्षयसि विद्यार्थिनः ? षण्ड ! ब्राह्मणापसद ! सदृशमस्य फलमनुभव । इति पादुकाभ्यां रामशर्मणः कपोलौ ताडमास । तेन निश्शक्तो महोपाध्यायो निस्संज्ञःसन् भूमौ पपात । अपरेद्युश्च रामशर्मा वार्ताशेषो बभूव ! ।

हन्त । पश्यत ! कामार्तानामवस्थाम् । विदुषामपि बुद्धिमान्द्यम् । विभाव्यते च 'परोपदेशे पाण्डित्यमिति । दुष्टा विषयाः परिहरणीया इति मधुरवाणी जेगीयते सर्वत्र ॥ शम् ॥

---

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



# विमर्शवेदिका

**श्रीलक्ष्मणाभ्युदयम्** हिन्दीभाषानुवादसहितम् । काव्यमिदं राजपुतानास्थडुंगरपुरनगरेश्वरश्रीमहाराजाधिराजमहारावलश्रीश्री १०८ श्रील-क्ष्मणसिंहजीमहोदयानां गुणवर्णनपरमतिसुंदरललितपदाविलसितं तत्रत्यमाध्यम-विद्यालये संस्कृतप्रधानपण्डितैः राजज्योतिर्विद्भिः ज्योतिषोपाध्यायैः साहित्य-विशारदैर्विरचितं वाह्यांतररुचिरं प्रकाशितम् । अत्रत्या काव्यसरणिरतितरां रसिकहृदयाल्हादिनी विद्योतते ।

**श्रीसुशीलोद्वाहमंगलम् श्रीलक्ष्मणीप्रशस्तिश्च**

एतदुभयमपि लघुकाव्ययुगलं उपरिनिर्दिष्टकविप्रवरनिर्मितं श्रीश्रीमन्महाराजा-धिराजश्रीलक्ष्मणसिंहविवाहमंगलवर्णनपरमतिसुन्दरं च । श्रीलक्ष्मणीप्रशस्तिरपि नामानुरूपगुणगणवर्णनपरेत्यावेदनमनावश्यकम् । मधुरवाणीप्रियपाठकाः पुस्तक-द्वयमिदमवश्यमनुवाच्य अमन्दानन्दभाजो भवंतु इत्यावेदयामहे । मूल्यं न निर्दिष्टमित्यतस्तेषां सकाशादवगच्छंतु ।

**प्राप्तिस्थानम्**

श्रीमहारावलहाईस्कूलप्रधानपण्डितगणेशरामशर्माशास्त्री डुंगरपूर ( राज-पुताना ) ।

---

**सभाशास्त्रम्** कर्णाटकभाषामयोऽयं ग्रन्थः । सभासु कार्य-पद्धतिः का केके वा नियमाः इत्यादिविषयविवेचनपरः अवश्यं सर्वैरपि संग्राह्यश्च । वेळगांवनगरस्था वाकीलव्यवसायिनो वी. ए. एल एल. वी. जोशीशंकररावमहोदयाः पुस्तकमिदमुपयुक्तं विलिख्य प्राकाशयन् । पुस्तकेऽस्मिन् प्रस्तावनां सुप्रसिद्धाः मुम्बापुरीवरिष्ठन्यायाधीश्वरपदमलंकुर्वाणा न्यायमूर्तयः नारायणस्वामिरावलैकूरमहभागा व्यलिखन् । तथाचात्र सभाविषये तात्विकं

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



विवेचनं प्रत्यक्षा कार्यपद्धतिः ग्रामपंचायती— म्युनिसिपलिटी — लोकलबोर्ड— स्वराज्यसभा—सहकारसभा—विधिमण्डलं (कायदेकौन्सिल) संस्थानियमाश्चेत्यादयः उपयुक्ताः सर्वे समाविषयाः सम्यगुपपादिताः। मूल्यंसार्धं रूप्यद्वयम्। प्राप्तिस्थानम्।

श्री.शंकरराव जोशी बी. ए. एल एल. बी. वकील
न्यायदीपप्रकाशनमंदिर वेळगांव (कर्णाटक)

## श्रीजगद्गुरुश्रीविश्वाराध्याष्टोत्तरशतनामावलिः

श्रीश्री जगद्गुरुवीरभद्रशिवाचार्यमहास्वामिविरचिता श्रीकाशीजङ्गमवाडीमठव्यवस्थापकैः प्रकाशिता। मूल्यमाणकद्वयम्। श्रीमूकैलासभूते वाराणसीक्षेत्रे जङ्गमवाडीमठाधीश्वराः श्रीविश्वाराध्याः पूज्यपादाः प्रसिद्धा एव चिरायापि। इदानींमेतत्पीठमलंकुर्वाणाः सर्वतंत्रस्वतंत्रा विद्यार्थिवत्सला विख्यातकीर्तयः संयमिवरा श्रीवीरभद्रशिवाचार्यमहास्वामिनः गुरुगौरवाढ्यनैरष्टोत्तरशतसंख्याकैर्नामभिः स्वरचितैरिमं पुस्तकमलंचक्रुः। अस्मिन् लघुनि पुस्तके विश्वाराध्याष्टकं विश्वाराध्यभजनं आनन्दभजनं मङ्गलं इतिच भक्तिरससंभृतैर्ललितरचितैः पदैर्गुरुकरुणाप्राप्तये स्तोत्राण्यायोजयंश्च। अतस्तद्गुरुचरणभक्तिकांक्षिभिरिदं पुस्तकमल्पमूल्यमप्यमूल्यमवश्यं संग्राह्यम्। प्राप्तिस्थानम्.

श्रीशिवधर्मग्रन्थमाला जंगमवाडीमठ काशी.

## गीतापरिचय

जगत्प्रसिद्धायाः श्रीभगवद्गीतायाः परिचायकोऽयं ग्रंथः हुब्बळ्ळि पुष्पलता (हुब्बळी) नगरनिवासिभिर्विद्वद्भिर्गलबीडुवालाचार्यैर्विलिखितः कर्णाटकभाषामयो लघ्वाकारश्च। मूल्यमाणकचतुष्टयं संपादकोऽस्य बीडीउडुपीरावमहोदयः। श्रीभगवद्गीताग्रंथस्य प्रत्येकाध्यायतो विषयः संक्षेपेण संगृहीतो गीतास्थविषयान् सम्यगवबोद्धुं बहूपकरोतीत्यत्र नास्ति सर्वथा संशयलेशः। अंते चास्य विंशत्यांगैकैकशो गीतावः समुद्धृतरुत्तमोत्तमैः गीता संक्षेपतो निरूपिताच।

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पुस्तकमिदं कर्णाटकभाषाविदः सर्वथाऽनुग्राह्यं गीताविषयमवश्यं विज्ञायेतामि-त्याशास्महे । प्राप्तिस्थानम् ।

एस्. वी. मंगळवेडु त्रिवेदी हुब्बळ्ळि.

## सनातनधर्मप्रदीपः

नंजिनगूडनः प्रकाश्यमानायाः श्रीपरिमलप्रकाशनमालायाः षष्ठं कुसु-ममिदम् । धर्मशास्त्रालंकारवेदांतशिरोमणिकवितिलकमाहित्यालंकारबिरुदांकितैः श्री. राजा एस्. गुरुराजाचार्यैर्लिखितं विविधश्रुतिस्मृतिपुराणवचनोदाहरण-पुरस्सरं समर्थितानां सनातनधर्मविषयाणां प्रकाशेन प्रदीपरूपं च । सर्वेषामपि वाचकानां सनातनधर्मरहस्यं सयुक्तिकं च यथा सुबोधं स्यात् तथा कर्णाटक भाषया विवृतमित्यतो नास्तिकमतप्रचारे घोरेऽस्मिन्काले सर्वथा सत्पथप्रदर्शकं स्यादित्यत्र नास्ति संदेहावसरः । ग्रन्थान्ते च ब्राह्मणैरवश्यमनुष्ठेया विषयास्तथा सांप्रतिके समये पीठाधीश्वरैरप्यवश्यं कर्तव्या विषयाश्च सम्यक्ततया विवेचिता मननीयाः संति । मूल्यमेतस्य सपादमेकं रूप्यम् । प्राप्तिस्थानं ।

श्रीपरिमळप्रकाशनमन्दिरं नंजिनगूडु [मैसूरस्टेट]

## श्रीसत्यध्यानविजयम्

### श्रीसत्यध्यानाष्टकं च

कट्टीहणमंताचार्यसुतश्रीनिवासाचार्यतनूजेन केशवेन रचितं तदनुजेन माधवेन रचितया टिप्पण्या कुंभकोणसभावृत्तांतेन च समेतम् । मूल्यमेकं रूप्यम् ।

श्रीश्रीमदुत्तरादिमठाधीश्वराणां दिगंतविख्यातयशसां द्वैतसिद्धान्तप्रति-ष्ठापकाचार्याणां जगद्गुरूणां विद्यौदार्यधैर्यशिष्यवात्सल्यविद्वत्पक्षपातादिगुणगणै-रखिलभारतप्रशंसितानां परपक्षनिरसनपूर्वकं सत्सिद्धांतसमर्थने बद्धादराणां श्रीसत्यध्यानतीर्थानां चरित्रवर्णनपरमिदं काव्यं कुंभकोणसभावृत्तांतरूपेण परिशिष्टेन तत्स्तोत्राष्टकेन च समेतं सटिप्पणं सुललितपदविन्याससमधुरमधुरैः

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



पद्यविशेषैः प्रियपाठकानामन्तरंगाणि समाकृष्य नितांतमानंदयति। एते हि कविप्रवरा लौकिककार्यप्रसक्तास्सतोऽपि सिद्धांताभ्यासंगपरायणा गुरुभक्त्या सरसं काव्यनिदं निर्माय तच्चरित्रजिज्ञासुषु महांतमुपकारमन्वतिष्ठन्निति सर्वेपीमं काव्यमवलोक्य अमन्दानन्दं विन्दन्तामित्याशास्महे। प्राप्तिस्थानम्

श्रीकेशवाचार्यकट्टि म्युनिसिपालटी चीफ आफिसर बागलकोट जि. विजापूर.

---

## श्रीगीतविहारः

स्वार्थैकलालसतया विमुखीकृतात्म
संसारभारपरिखिन्नहृदां जनानाम्।
कालक्रमार्थमथवादिमसिद्धतायै
संसारलोपनकृतेः समुदैन्न गीता ॥ १ ॥

कार्यः कथं जगति मोक्षपथानुरोधम्
संसार एव हि तथाखिलमानुषाणाम्।
कर्तव्यमस्ति किमिहोचितमेतदेव
गीता च तात्विकदशोपदिशत्यजस्रम् ॥ २ ॥

गार्हस्थ्यमाश्रममवाप्तुमनोभिरेतत्
संसारपूर्वतनशास्त्रमपित्वपूर्वम्।
अध्येयमेव वयसि प्रथमे त्ववश्यम्
निःश्रेयसाय परमाय चिरं श्रियै च ॥ ३ ॥

पं. हुनळीत्युपाव्हो भीमाचार्यः गीताश्रमः गलगली डि. विजापूर

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



# सखि सुलोचने! धन्याऽसि

(लेखिका— सौ. उर्मिलादेवी पुष्पपुरम्)

सखि सुलोचने! त्वदीयसरसलेखभूषितान् त्वयैव प्रेषितान् 'मधुरवाण्या' श्चितुरानङ्कानधिगच्छम्। आमूलादाचरमपृष्ठं सर्वानपि लेखान् विशेषतश्च त्वदीयांल्लेखानन्ववाचयम्। अत्रभवमहं लोकातीतमानन्दभरम्। प्रमोदपरवशा क्षणं व्यस्मरमात्मानमपि। मधुरवाण्या एव लेखानां गौरवम्, आहोस्वित् तव लेखैरेव मधुरवाण्या महत्त्वम् इति विचारयन्त्या मम हृदयं समाहितं स्मृतिपथमवतीर्णेन 'पद्येन—केनचित्पद्येन

सरसी कमलेन शोभते कमलं वाथ तया विराजति।
शशिना हि विभाति शर्वरी तुहिनांशुः क्षपया हि रोचते॥

सरसां ललितां च तव लेखनचातुरीमवलोक्य क्षणं विस्मयस्तिमिताऽभवम्। बहुकालमभ्यस्तवतामपि पुरुषाणामगोचरीभूता ईदृशी लेखनकला कुतस्त्वयाऽऽसादिता? । तत्परिचयशून्या मधुरवाणीवाचकाः प्रायेण भ्रान्ताः स्युर्यत् त्वदीयलेखानां लेखिका वस्तुतो नैव सुलोचना ललना, किन्तु सुलोचननामधारी सुलोचन एवेति। परं त्वदीयपरिचयवर्तीनां मादृशीनां सखीनां तव बन्धूनां च न वैतथ्यशङ्कावकाशः।

सखि सुलोचने! अहमपि आबाल्यादापरिणयम् तव सहाध्यायिनी सतीर्थ्या सब्रह्मचारिणी भूत्वा तव पितुर्मातुश्च सकाशात्काव्यनाटकालङ्कारसाहित्यशास्त्राण्यध्ययनमकरवम्। अभ्यस्ता चावाभ्यां कवितारचनाकला। प्रयतितं च लेखनकलाधिगमाय। त्वमिवाहमपि प्रत्यशृणवं संस्कृतज्ञमेव वरं वृणीयेयेति। परं का वयं वराक्यो नियतेः प्रतीपं प्रतिज्ञातुम्। भाग्यवती भवती कृतप्रतिज्ञानुसारमनुरूपमभिलषितं संस्कृतज्ञमेव पतिं वृतवती। अहमपि समभीष्टयतिवरणाय बहुप्रयत्नमकरवम्। समायासयमात्मानं, पितरौ, बन्धूंश्च। अनशनव्रतमङ्गीकार्षम्। मौनमवालम्बे। लज्जां पर्यत्यजं कुलकन्योचिताम्। दैवे प्रतिकूले किं वा कार्यं सिध्येत। मम सर्वे प्रयत्नाः विफलीभूताः। सकलाः प्रयासाः मोघाः सञ्जाताः। अशेषाः कामनाः

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



कान्यप्यवस्थां गताः । अन्ततो दाक्षिण्येन पितृनिर्धारितमेव वल्लभं पर्यणयमहम् । मम वल्लभस्तु सुरूपः, सुगुणः, सुशीलः, श्रीलः, शालीनः, कुलीनो, विद्याशालुदारचेता, मधुरभाषी, सदा स्मितास्यः, पाश्चात्यवैद्यविद्यापारङ्गतः भिषक्सार्थां सिद्धहस्तः प्रतिमासं सहस्राधिकधनार्जनक्षमः प्रथितयशाश्च । सर्वे वरोचिताः कुलकुमारीसमपेक्षिता गुणा विलसन्त्येव मे प्रियकरे केवलं संस्कृतज्ञानमन्तरा । तदपि यथमात्मिपन्ने प्रेयसि काञ्चने रत्नमिव, नहि जगति अहर्निशमहमेवाभाविध्यं मान्यवतीष्वग्रगण्या । जगति को वा पुरुषोऽस्ति निर्दोषो गुणगणपरिपूर्णो वा श्रीपतिं नारायणमन्तरा । पतिगृहे स्वसुदमेवास्ति सर्वं सुखम् । मातेव स्निह्यति मयि श्वश्रूः । आनन्दयति सखीव मां ननन्दा । सहोदरीनिर्विशेषं पश्यन्ति मां यातरः । सर्वथा सर्वदा वशवर्ती मे प्राणपतिः । देवरास्तु देवीमिव भावयन्ति माम् । भूयांसो दासदासीजनाः परिचर्यायां बद्धादराः अञ्जलीकृतहस्ताः । विशालं सुन्दरं सालङ्कृतं मन्दिरं । परितो विविधपुष्पलतासनाथं मन्दवहत्पवनमुपवनम् । गृहे आधुनिकसुधारणासमुचितानि विपुलानि भोग्यवस्तूनि । समुल्लासिता विद्युद्दीपाः । पावन—धानीयवाहकानां नैव न्यूनता । दूरस्थसंभाषणसंगीतश्रावकं 'रेडियो' यन्त्रम् । विपुलमैश्वर्यम् । चित्रविचित्राणि दुकूलानि । धारयितुमशक्यानि बहूनि सुवर्णरत्नाभरणानि । एवं समृद्धायामपि सुखभोगसामग्र्यां संस्कृतगन्धवैधुर्येण तथा न रमते मनो मे, यथा संस्कृतविदुषो दरिद्रस्य कुटीरे । उपमाद्यलंकारहृतचेतसो मे कथमानन्दाय भवेयुर्भारभूतानि कनक—मणिभूषणानि ? । मृदुललितपदशय्याविलोलमानसाया मे शशाङ्कधवलप्रच्छदपटावृता हंसतूलशय्या न किञ्चिदपि तोषमावहति । रूक्षवैद्यकव्यवसायनिमग्ने सदा रोगिजनपरीक्षाव्यग्रे प्रियकरे न तादृशी रसिकता, यादृशी संस्कृतसाहित्यपरिशीलनकुशले । विवाहात्प्राग् भाविसुखविषये बहव एवासन्मे मनोरथाः । बहुधैव मनोराज्यमकरवम्—संस्कृतविदुषा वल्लभेन नित्यमेव नाटकादिपरिशीलनं कर्तव्यम् । नव—नवानि पद्यानि रचयितव्यानि । विज्जिका—शीलाभट्टारिकावद्—सरसं काव्यं निर्माय समुज्ज्वला कीर्तिरार्जनीया इत्यादि । परं विधिवशान्मे सर्वे सङ्कल्पा मनस्येवोत्पन्ना मनस्येव विलीनाः । मदीयां मानसिकीं स्थितिं सूक्ष्मेक्षिकया निरीक्ष्य मे दयितः स्वयं संस्कृतगन्धविधुरोऽपि केवलं मन्मन-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



# सखि सुलोचने! धन्याऽसि

(लेखिका— सौ. उर्मिलादेवी पुष्पपुरम्)

सखि सुलोचने! त्वदीयसरसलेखभूषितान् त्वयैव प्रेषितान् 'मधुरवाण्या' श्चितुर्गनङ्कानद्यागच्छम्। आमूलादाचरमपृष्ठं सर्वानपि लेखान् विशेषतश्च त्वदीयांल्लेखानन्ववाचयम्। अन्वभवमहं लोकातीतमानन्दभरम्। प्रमोदपरवशा क्षणं व्यस्मरमात्मानमपि। मधुरवाण्या एव लेखानां गौरवम्, आहोस्वित् तव लेखैरेव मधुरवाण्या महत्त्वम् इति विचारयन्त्या मम हृदयं समाहितं स्मृतिपथमवतीर्णेन 'पद्येन—केनचित्पद्येन

सरसी कमलेन शोभते कमलं चाथ तया विराजते।
शशिना हि विभाति शर्वरी तुहिनांशुः क्षपया हि रोचते॥

सरसां ललितां च तव लेखनचातुरीमवलोक्य क्षणं विस्मयस्तिमिताऽभवम्। बहुकालमभ्यस्तवतामपि पुरुषाणामगोचरीभूता ईदृशी लेखनकला कुतस्त्वयाऽऽसादिता?। त्वत्परिचयशून्या मधुरवाणीवाचकाः प्रायेण भ्रान्ताः स्युर्यत् त्वदीयलेखानां लेखिका वस्तुतो नैव सुलोचना ललना, किन्तु सुलोचनानामधारी सुलोचन एवेति। परं त्वदीयपरिचयवतीनां मादृशीनां सखीनां तव बन्धूनां च न वैतथ्यशङ्कावकाशः।

सखि सुलोचने! अहमपि आबाल्यादापरिणयम् तव सहाध्यायिनी सतीर्थ्या सब्रह्मचारिणी भूत्वा तव पितुर्मातुश्च सकाशात्काव्यनाटकालङ्कारसाहित्यशास्त्रग्रन्थानध्ययनमकरवम्। अभ्यस्ता चावाभ्यां कवितारचनाकला। प्रयतितं च लेखनकलाधिगमाय। त्वमिवाहमपि प्रत्यशृणवं संस्कृतज्ञमेव वरं वृणीयेति। परं का वयं वराक्यो नियतेः प्रतीपं प्रतिज्ञातुम्। भाग्यवती भवती कृतप्रतिज्ञानुसारमनुरूपमभिलषितं संस्कृतज्ञमेव पतिं वृतवती। अहमपि समभीष्टवरनिर्धारणाय बहुप्रयत्नमकरवम्। समायासयमात्मानं, पितरौ, बन्धूंश्च। अनशनव्रतमप्यकार्षम्। मौनमवालम्बे। लज्जां पर्यत्यजं कुलकन्योचिताम्। दैवे प्रतिकूले किं वा कार्यं सिध्येत। मम सर्वे प्रयत्नाः विफलीभूताः। सकलाः प्रयासाः मोघाःसञ्जाताः। अशेषाः कामनाः

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



काम्यप्यवस्थां मताः । अन्ततो दाक्षिण्येन पितृनिर्धारितमेव वल्लभं पर्यणयमहम् । मम वल्लभस्तु सुरूपः, सुगुणः, सुशीलः, श्रीलः, शालीनः, कुलीनो, विद्यानुदारचेता, मधुरभाषी, सदा स्मितास्यः, पाश्चात्यवैद्यविद्यापारङ्गतश्चिकित्सायां सिद्धहस्तः प्रतिमासं सहस्राधिकधनार्जनक्षमः प्रथितयशाश्च । सर्वे वरोचिताः कुलकुमारीसमपेक्षिता गुणा विलसन्त्येव मे प्रियकरे. केवलं संस्कृतज्ञानमन्तरा । तदपि यद्यभविष्यन्मे प्रेयसि काञ्चने रत्नमिव, तर्हि जगति अहमिवाहमेवाभविष्यं भाग्यवतीष्वग्रगण्या । जगति को वा पुरुषोऽस्ति निर्दोषो गुणगणपरिपूर्णो वा श्रीपतिं नारायणमन्तरा । पतिगृहे समृद्धमेवास्ति सर्वं सुखम् । मातेव स्निह्यति मयि श्वश्रूः । आनन्दयति सखीव मां ननन्दा । सहोदरीनिर्विशेषं पश्यन्ति मां यातरः । सर्वथा सर्वदा वशवर्ती मे प्राणपतिः । देवरास्तु देवीमिव भावयन्ति माम् । भूयांसो दासदासीजनाः परिचर्यायां बद्धादराः अञ्जलीकृतहस्ताः । विशालं सुन्दरं साट्टालकं मंदिरं । परितो विविधपुष्पलतासनाथं मन्दवहत्पवनमुपवनम् । गृहे आधुनिकसुधारणासमुचितानि विपुलानि भोग्यवस्तूनि । समुल्लसिता विद्युद्दीपाः। पाचकाः—यानीयवाहकानां नैव न्यूनता । दूरस्थसंभाषणसंगीतश्रावकं 'रेडियो' यन्त्रम् । विपुलमैश्वर्यम् । चित्रविचित्राणि दुकूलानि । धारयितुमशक्यानि बहूनि सुवर्णरत्नाभरणानि । एवं समृद्धायामपि सुखभोगसामग्र्यां संस्कृतगन्धवैधुर्येण तथा न रमते मनो मे, यथा संस्कृतविदुषो दरिद्रस्य कुटीरे । उपमालङ्कारहृतचेतसो मे कथमानन्दाय भवेयुर्भारभूतानि कनक—मणिभूषणानि ? । मृदुललितपर्यङ्कशय्याविलोलमानसाया मे शशाङ्कधवलप्रच्छदपटावृता हंसतूलशय्या न किञ्चिदपि तोषमावहति । रूक्षवैद्यकव्यवसायनिमग्ने सदा रोगिजनपरीक्षाव्यग्रे प्रियकरे न तादृशी रसिकता, यादृशी संस्कृतसाहित्यपरिशीलनकुशले । विवाहात्प्राग् भाविसुखविषये बहव एवासन्मे मनोरथाः । यद्धेव मनोराज्यमकरवम्—संस्कृतविदुषा वल्लभेन नित्यमेव नाटकादिपरिशीलनं कर्तव्यम् । नव—नवानि पद्यानि रचयितव्यानि । विज्जिका—शीलाभट्टारिकावद्—सरसं काव्यं निर्माय समुज्ज्वला कीर्तिरार्जनीया इत्यादि । परं विधिवशान्मे सर्वे सङ्कल्पा मनस्येवोत्पन्ना मनस्येव विलीनाः । मदीयां मानसिकीं स्थितिं सूक्ष्मक्षिकया निरीक्ष्य मे दयितः स्वयं संस्कृतगन्धविधुरोऽपि केवलं मन्मन-

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



स्तोषाय विपुलं संस्कृतग्रन्थराशिं क्रीत्वा मह्यमर्पितवान् । तेनमृतपिपासा तत्क्षणैवापनीता । संस्कृतज्ञयोरसिकयोरसज्ञयोर्दम्पत्योः शयनासनसंभाषणविहारादिषु यत्स्वारसिकं सुखं तत्स्वर्गेऽपि नोपलभ्येतेति मे मतम् । सखि त्वदीयलेखे ! प्रतिबिम्बितं दम्पत्योर्युवयोरसमयं जीवनं, प्रणयप्राथं संसारं पथमयं भाषणं हसनं सहवासं च समालोच्य प्रमोदस्य परां काष्ठामन्वविन्दम् । व्यस्मरमात्मानं । अस्मरं च "गतप्राया रात्रिः शशिमुखि ! शशी शीर्यत इव—" इति मयूरकवेः प्रियाराधनपरं पद्यं प्रणयपरिपाकमधुरं । ईदृशं दाम्पत्यमेव सत्यं दाम्पत्यम्, अन्यदाभासमात्रमवेदिषमहम् । प्रियवयस्ये ! साहित्यशास्त्राध्ययनसमये 'अन्यासु तावदुपमर्दसहासु भृङ्ग !' धन्यासि या कथयसि 'कोशद्वन्द्वमियं दधाति नलिनी कादम्बचञ्चूक्षतम्' 'दम्पत्योर्निशि जल्पतोः' 'शयिता सविधेऽप्यनीश्वरा' 'ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः' इत्यादीनि हृदयङ्गमानि व्यङ्ग्यार्थमयानि मधुरवर्णानि सालङ्काराणि पद्यान्यनुवाचयतोरावयोर्यः सुखचरमसीमास्पर्शः समजनि किमिदानीं तत्स्मरसि ? । अथवा तादृशायाः स्थितेः प्रत्यक्षानुभवसौभाग्यशालिन्यास्ते कुतस्तत्स्मरणस्यावश्यकता । मम तु तत्स्मरणमन्तरा किमन्यच्छरणम् । शाकुन्तल—विक्रमोर्वशीय—मालविकाग्निमित्र—मालतीमाधवादि नाटकेषु विदग्धनायकचाटूक्तिचमत्कृतचेतसो नायिका इवाहमपि भाविवल्लभेन तादृशं भव्यं दिव्यं सुखमनुभवेयमिति महती मे प्रत्याशा जागर्ति स्म । तादृशं चित्रमेव हृदयपटे आकांक्षालेखिन्या अनुरागालक्तकरसेनाचित्रयमहम् । तदिदं चित्रं प्रमार्जितमिदानीं दुर्दैवहतकेन । भाविवल्लभेन एवं विलासादिकं क्रियेत, मया त्वेवं प्रतिविधेयं प्रेमपरवशयेति पुरा कल्पनातरंगलोलाऽधुना तपस्विनी संवृत्ताऽस्मि संसारेऽवलम्बितसमुदासभावा । असंस्कृतज्ञेऽपि प्रेयसि देवे इव महती भक्तिरस्ति मे । सानुरागं सश्रद्धं च परिचर्यां विदधाम्येव पतिदेवस्य । स्त्रीणां को वाऽन्यः शरणं पतिदेवमन्तरा । धत्ते दैवी भावनाऽन्या । रसज्ञताभावनाऽन्या । द्वयोर्महदन्तरमस्ति । मानसिकीमतृप्तलालसासमुदितां वेदनां न कस्यापि पुरतः कदापि दर्शयामि । सदा स्मितमुखी विनीता शुश्रूषे गुरुजनम् । परिचरामि दासीव प्रियवरम् । तेन तुष्यति नितरां मे सरलचेता दयितः । दासी—वयस्याजनसेवासुखयोरन्तरमवगन्तुं न भवति मे

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



प्रियवल्लभः । एवं वाह्यतः सर्वतः सुखमयमिव भासमानमपि न मे जीवनं स्वरसतो मधुरम् । तदेव मधुरं जीवनं यत्संस्कृतज्ञयोरसिकयोर्दम्पत्योः । तदेवं सरसं दाम्पत्यं, यत्खलु काव्यमय—विलासमयप्रेमसंल्लापपरवशम् । सखि ! वहुदूरं गतं भावनापरवशया मया । तादृशं रससञ्जीवनम् जीवनं जीवनं निलिम्पसंप्रार्थ्यं दाम्पत्यमनुभवन्तीं भवतीमभिनन्दामि सानन्दम् । मास्तु नाम तादृशं सुखं मे मन्दभाग्याया अस्मिञ्जन्मनि मम प्राणनिर्विशेषया प्रियसख्याऽनुभूयते इत्येतदपि सन्तोषावहं समाधानकरं च मनसः । जन्मन्यस्मिन् अपूर्णमनोरथाऽपि **'साहं तपस्तीव्रतरं विधातुं तथा यतिष्ये यतचेतसाऽलम् । यथैव भूयाज्जननान्तरे मे भर्ता रसज्ञोऽमरभारतीज्ञः'।** भवती जन्मन्यस्मिन्नेव पूर्वसुकृतवशात्तादृशपतिसह वासस्वर्गसुखमनुभवसि । अतः सखि ! सुलोचने !, धन्याऽसि त्रिवारं धन्याऽ इति सादरं सानन्दं धन्यवादान्वितीर्य विरमामीयतैव रममाणा ।

---

# निर्माय्यं मर्मोद्घाटनम्

जनांतिकम् म. स. सं)

मुरारेः तृतीयः पंथाः

केचन केदारधीश्वराः सरदारमहोदाराः मुरारजीसविधे क्षेत्रनियमपरिवर्तनादिसूचनार्थं गता आसन् । तेन तदा सुपरुषाक्षरमुदतारि गोपालेन मुरारिणा ।

**क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।**

योग्यमिदमुत्तरं मंत्रिपदाधिरूढस्य । अत एवोक्तम् ।

देशं राष्ट्रमुपासते हि वहवः स्युश्चापि ते मंत्रिणः
जानीते त्वधिकारदर्पशठताधाष्ट्र्यं मुरारिः परम् ।

---

इंग्लंडे साम्राज्यपालसं चर्चिलमंत्रिमंडलं अधिकारप्रच्युतं सत् संप्रति साम्राज्यसूत्रधारिणां अॅटलीलारेन्सप्रभृतीनां अष्टचत्वारिंशत्तमे ऐसवीयाब्दे

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.



भारतपरित्यागघोषणामुपनिशम्य संतापातिशयेन वेपमानगात्रयष्टि बहुविधं प्रजल्पतीत्यतिरोहितमिदं सर्वेषामक्षरमुखानाम् ।

**ज्ञातास्वादः सुजलसुफलां (भारतभुवं) को विहातुं समर्थः ।**

---

बंगाले अत्याचारं निरीक्ष्य यवनपराक्रमविषये अत्यंतमभिमन्यमानो मुस्लीमलीगः तत्परिणामभूतं ततोऽपि दारुणतरं विहारदुरन्तं निरीक्ष्य आत्मगतं किं मंत्रयति ।

स्वयं निर्मायांशुं वन हननियाऽस्मिन्निपतितम्
मधैवादायास्यं स्वयमहिपतेश्चुम्बितमिदम् ।
अहो स्थित्वा गेहे प्यहह निहितो द्वारि दहनः
ममैवायं मंतुः स्वहितशतहन्तुर्जडधियः ॥

त्रिंशत्कोटिहिन्दून् विप्रकृता अल्पसंख्याका अपि यवनाः मीनमेषानिव क्षणार्धे छेत्तुं भेत्तुं कर्तितुं च समर्था इति प्रलपन्ती लीगप्रभावली इदानीं कलकत्ता—विहारादिघटनानालोक्य किं ब्रवीति ।

ज्वरः इव मदो मे व्यपगतः
एताभ्यां बंगालविहारविप्लवाभ्यां हिंदुभिः किं मवबोद्धव्यम् ?
विनिपातनिवर्तनक्षमं मतमालम्बनमात्मपौरुषम् ।

---

'संस्कृतं' पत्रं मधुरवाण्यां प्रकाशितान् विषयान् स्वयं प्रकाशयत् मधुरवाण्या नामापि नोल्लिखति चित्रमिदम् । 'संस्कृत' पत्रम् आधुनिकेन 'कविराजेन' (मधुरवाणीप्रधानसंपादकेन) विरचितं मधुरवाण्यां प्रकाशितं पद्यमयं 'श्रीशिवप्रमोदः पत्रम्' इति लेखेनालङ्कृत्याप्यात्मानं 'मधुरवाणी' नाम नोल्लिखति कृतज्ञताबुद्ध्येति चित्रमेतत् । अथवा युक्तमेवेदम्—

तृतीयाप्रकृतिः शूरकथां साटोपडम्बरम् ।
वदन्नपि विभेत्येव स्त्रीनामग्रहणेऽप्यलम् ॥

अथवा— स्वमुष्टवस्तुप्रथिताविशाल्यां नाख्यायते गौरवहानिबुध्या ॥

तथापि जानन्त्येव निपुणमतय—ओजो—माधुर्यादिगुणैः 'सरसमुज्ज्वलं खण्डकाव्यमिदं न 'संस्कृतस्य,' किन्तु 'मधुरवाण्या एवे' ति । "काकैर्निजात्मजतया परिरक्ष्यमाणं जानाति पञ्चमरवेण पिकं विवेकी ।"

---

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

# नियमावलिः

(१) मधुरवाणीनाम्नीयं संस्कृतपत्रिका प्रत्याङ्ग्लमासप्रथमसप्ताहे प्रकाश्यते

(२) अस्यां प्रायः प्रत्यङ्कमेका लघुकथा, सनातनधर्मविषयकः प्रबन्धः प्राचीनसाहित्यं चान्ये प्रचलितविषयका विवेचनात्मकालेखाः प्रकटीक्रियेरन्। सनातनधर्मद्रोहिणो लेखा नावकाशं विन्देरन्। ग्राहकेतरेषां लेखाः पद्यानि वा न प्रकाश्येरन्।

(३) पत्रिकाया अस्याः अग्रिमदेयं मूल्यं मार्गव्ययसहितं रूप्यकचतुष्टयम्। अंकस्यैकस्याणकषट्कम् मूल्यम्। द्वीपान्तरवासिनां तु वार्षिकं मूल्यं पञ्चरूप्यात्मकम्। विना मूल्यमादर्शसंचिका न प्रदीयेत। तदिच्छुभिश्च चतुराणकमूल्यानि शुल्कपत्राणि प्रहीयन्ताम्।

(४) मधुरवाण्याः श्रेयोभिवृद्धये पञ्चरूप्यकाणां दातारः सहायकाः, दशरूप्यकदायिनः पोषकाः, पञ्चविंशतिरूप्यकप्रदा अनुग्राहकास्ततोऽप्यधिकं यच्छन्तः संरक्षका इति व्यपदिश्येरन्।

(५) मधुरवाण्यां नीरसा असुवाच्याक्षरा एकपार्श्वे एवालिखिता लेखाः नावसरमासादयेयुः। लेखपरिवर्तनादिषु निरनुयोज्याधिकाराः खलु सम्पादकाः। अप्रकाशिता लेखा विना प्रापणव्ययं न प्रतिप्रहीयेरन्।

(६) लेखा, विज्ञापनानि, समालोचनापेक्षिणो ग्रन्थाः, पत्रिकार्थेत्यादि सकलं मधुरवाणी कार्यालय बेळगांव नं. १६९८ इति संकेतेन प्रेष्यम्।

पत्रं मूल्यधनं वा प्रेषयद्भिः निजसंकेतादिकं देवनागरीलिप्यैव सुस्पष्टं विलेखनीयम्। भूतपूर्वग्राहकैः पत्रस्य धनस्य वा प्रेषणसमये ग्राहकसंख्यालेखनं नैव विस्मरणीयम्। उत्तरप्रेप्सुभिरवश्यं प्रेषणीयः प्रापणव्ययः।

**प्राप्तिस्थानम्**

**मधुरवाणी कार्यालय, १६९८ बेळगांव.**

Printed at Veer-bharat Printing Press, Belgaum, by its proprietor A. P. Chougule and Published by Shriniwasacharya Burli at House No. 1698 Belgaum.

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.

Funding: Tattva Heritage Foundation,Kolkata. Digitization: eGangotri.

Regd No. B. 3664.

# PINK OINTMENT

खरूज २४ तासत बरी होतें

# पिंक मलम

तोंडावरील तारुण्यपिटिका (मुरुम)
डोक्यांतील फोड, इसब व त्वचारोगांसाठीं
सुगंधीत मलम

याने कपडे खराब होत नाहीं

सल्फनमाईड, मर्क्युरी, कँम्फरझिंक
आणि म्हैसूर चंदन तेलांत
बनविलेले
पिंक मलम

## स्टार कंपनी बेळगांव.

CC-0. Bhagavad Ramanuja National Research Institute, Melukote Collection.